॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

३९

वैयाकरणनिकाये

# स्फोटवादविवेचनम्


लेखकः

डॉ० श्रीकृष्णमणित्रिपाठी

( व्याकरण-साहित्य-वेदान्त-सांख्ययोग-धर्मशास्त्र-पुराणेतिहासाचार्यः )

लब्धावकाशप्राध्यापकः, पुराणेतिहास-भूगोल-संस्कृति-विभागाध्यक्षश्च

वाराणसेय श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पादकः

डॉ० श्रीपति अवस्थी

( एम० ए०, पुराणेतिहासाचार्यः )

व्यवस्थापकः

भारतीय-साहित्य-शोधसंस्थानस्य

वाराणस्याम्





चौखम्बा सुरभारती प्रकाशन

वा रा ण सी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

३९

वैयाकरणनिकाये

# स्फोटवादविवेचनम्

लेखकः

डॉ० श्रीकृष्णमणित्रिपाठी

( व्याकरण-साहित्य-वेदान्त-सांख्ययोग-धर्मशास्त्र-पुराणेतिहासाचार्यः )

लब्धावकाशप्राध्यापकः, पुराणेतिहास-भूगोल-संस्कृति-विभागाध्यक्षश्च

वाराणसेय श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पादकः

डॉ० श्रीपति अवस्थी

( एम० ए०, पुराणेतिहासाचार्यः )

व्यवस्थापकः

भारतीय-साहित्य-शोधसंस्थानस्य

वाराणस्याम्

चौखम्बा सुरभारती प्रकाशन

वा रा ण सी

प्रकाशक—
चौखम्बा सुरभारती प्रकाशन
के. ३७/११७, गोपालमन्दिर लेन, पो० बा० १२९,
वाराणसी—२२१००१

४२५
[illegible]



प्रथम संस्करण १९७८

मूल्य २-५०

अन्य-प्राप्तिस्थान—
चौखम्बा विद्याभवन
चौक ( बनारस स्टेट बैंक भवन के पीछे ),
पो० बा० नं० ६९, वाराणसी—२२१००१

मुद्रक—
श्रीजी मुद्रणालय
वाराणसी—२२१००१

CHAUKHAMBA SURBHARATI GRANTHAMALA

39

VAIYĀKARANANIKĀYE

# SPHOTVĀDAVIVECANAM

By

Dr. Shrikrishnamani Tripathi

**Vyakarana-Sahitya-Vedanta-Sankhyayoga-Dharma-shastra-Puranetihasacharya.**

Ex. Professor & Head of

*Puranetihasa, Geography and Culture Deptt.*

Sri Sampurnananda Sanskrit University Varanasi.

Edited by

Dr. Shripati Awasthi

**M. A., Puranetihasacharya,**

Manager, Bharatiya Sahitya Shodha Sansthana, Varanasi.

CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

# समर्पणम्

श्रुति-स्मृति-पुराणार्णवनिर्दिष्ट सनातनधर्मानुकूलमर्यादाप्रतिपालकानां भार-
तीयसंस्कृति संस्कृतान्तःकरणानां शिक्षणकलाकौशलप्रख्यातकीर्तीनां
सौम्यमूर्तीनां सुरभारतीसमुपासनासमासक्तचेतसां सचेतसां स्व-
नामधन्यानां विद्वन्मूर्धन्यानां महाशयजीतिनाम्ना प्रसिद्धानां
तुरीयाश्रमे श्रीराघवानन्द सरस्वती नामधेयानां
परमश्रद्धास्पद प्रातःस्मरणीयचरणानां गुरु-
प्रवराणां सर्वतन्त्रस्वतन्त्राणां श्रीमतां
पं० रामयशस्त्रिपाठिमहोदयानां
पुण्यस्मृतौ श्रद्धया धिया प्रस्तुतं
स्फोटवादविवेचनम् ।

गुरुपूर्णिमा २०३४

विनीतः—
**श्रीकृष्णमणित्रिपाठी**

# सम्पादकीयम्

भारतस्य प्राचीना अर्वाचीनाश्च विचारका वेदस्यापौरुषेयत्वे नित्यत्वे च सहमताः सन्ति। परमकृपालु नारायणः प्रतिकल्पारम्भे तपस्तप्यद्भ्यो महर्षिभ्यो-ऽनादिनित्यस्य वेदस्य ज्ञानं ददाति तथा तेनैव वेदज्ञानेन लोकस्य समस्तो व्यवहारः प्रचलति, प्रसरति च समेषां प्रवृत्तिः। भारतीयस्येतिहासस्याद्वितीयो ज्ञाता वेदविभाजयिता, पुराणप्रणेता, महाभारतनिर्माता च कृष्णद्वैपायनो भगवान् व्यासो महाभारते ब्रूते—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृतयः॥

परन्तु पाश्चात्या विपश्चितः तदनुगामिनश्च समालोचका नैतत्सिद्धान्तं स्वीकुर्वन्ति, तेषां मतमस्ति यत् मानवः प्रारम्भे पशुसमान आसीत्, शनैः शनैः तद्विकासः समभवत् तथा सहस्रवर्षानन्तरं स समुन्नतावस्थामुपगतः। विकासवादस्यैतन्मन्तव्यं कल्पनाभित्तावधरितमस्ति। भारतीयवाङ्मयानुसारं लौकिकभाषाया विकासो वेदादेवाजायत। स्वायम्भुवेन मनुना लिखितमस्ति यद् ब्रह्मणा सृष्ट्यादौ सर्वेषां पदार्थानां संज्ञा = नाम, पृथक् पृथक् कर्माणि, शब्दार्थानां रचनाविशेषः, विभक्तीनां वचनानि, रूपाणि च वेदशब्देभ्य एव निर्द्धारितानि।

तथाहि मनुस्मृतौ—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥

एवं महर्षिभिः प्रारम्भे एव वेदाधारेण सर्वव्यवहारोपोगिनी अतिविस्तृता या भाषा उपदिष्टा, सैव भाषा विश्वस्यादिव्यवहारिकी भाषाऽभवत्। देवा यां विश्ववाणीं प्रकटयन्ति तामेव भाषां साधारणा जना अपि ब्रुवते।

तदुक्तमृग्वेदस्याष्टमे मण्डले—

**दवा वाचमजायन्त वेदास्तां विश्वरूपाः पशवो वदन्ति** (ऋ. वे. ८।१००।११) **'प्रयोगचोदनाभावानथैकत्वमविभागाम्'** (१।३।३०) इति जैमिनीय सूत्रस्य व्याख्यायां शबरस्वामी ब्रवीति **'य एव लौकिकास्त एव वैदिका स्तएव तेषामर्थाः** इति। महाभाष्येऽपि **'केषां शब्दानां लौकिकानां वैदिकानां च।** एतेन स्पष्टं प्रतीयते यत् लौकिक-वैदिकवाचां पदानां च भेदो नास्ति केवलं वर्णानुपूर्वीनियतत्वेऽनित्यतत्वे च भेदो वर्तते।

संस्कृतवाङ्मये सर्वसम्मतः सिद्धान्तोऽस्ति यत् प्रत्येकविद्याया प्रवक्ताऽस्ति ब्रह्मदेव एव। अत आपाततः सिध्यति यद् वर्तमानकालापेक्षया प्राचीन-प्राचीनतर-

प्राचीनतमकालेषु संस्कृतभाषा विस्तृत-विस्तृततर-विस्तृततमाऽऽसीत्। शब्द-शास्त्रस्य प्रामाणिक अचार्यः पतञ्जलिमुनिः संस्कृतभाषायाः प्रयोगविषयं निर्दिशन् ब्रवीति यत्—**सर्वे खल्वेते शब्दा देशान्तरे प्रयुज्यन्ते नचोपलभ्यन्ते। उपलब्धौ यत्नः क्रियताम्। महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्या बहुधा भिन्नाः। एकशतमध्वर्युशाखा; सहस्रवर्त्मा सामवेदः, एकविंशतिधा वाह्वृच्यम्, नवधाऽर्थणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम् इत्येतावान् शब्दस्य प्रयोगविषयः'।**

अनेन प्रमाणेन सिध्यति यत् कस्मिंश्चित् समये संस्कृतभाषायाः क्षेत्रमत्यन्तं विस्तृतमासीत्, यतो हि सर्वाषां भाषाणामादिमूलं संस्कृतभाषैवासीत्। संस्कृतभाषा हि मनुष्याणां विस्तारेण सह देश-काल-परिस्थितीनां विपर्यासेन आर्याणां मूलप्रदेशात् शनैः शनैः विपरिणामं प्राप्ता संकुचिताऽभवत्। उत्तरोत्तरं संस्कृतभाषायामनेकानि परिवर्तनानि जातानि, किंतु पाणिनेः व्याकरणरचनया स परिर्क्तनप्रवाहोऽवरुद्धः।

भगवतो भूतभावनस्यासीमदयया कतिपयेभ्यो दिनेभ्यः केचन भारतस्य कर्णधाराः स्वीयां मधुमयीं दृष्टिं निक्षिपन्ति वराक्यां संस्कृतभाषायामपि। आश्वासयन्ति च संस्कृतसमाजं समुद्धारणार्थम्। ते हि दयालवः संस्कृतभाषा-महत्त्वविदः स्वस्वभाषणे न केवलं संस्कृतभाषाया नाम ग्रहणेनात्मानं पुनन्ति, अपितु संस्कृतभाषाया अध्ययनस्यात्यन्तं प्रदर्शयन्त्युपयोगित्वं, वर्द्धयन्ति चास्या महत्त्वम्, परन्तु परं खेदास्पदमिदमस्ति यत्-ते यावदस्या भारत्या गौरवं गायन्ति ततोऽप्यधिकमस्या इतिवृत्तेन सहान्यायमपि विदधति। यद्यपि तेषां सचेतसामस्यान्यायस्य मूलं संस्कृतग्रन्थानां भारतीयदृष्ट्याऽनध्ययनमेव कारणं भवेत् तथापि अन्यायस्तु स्यादेव। अथ चास्यान्ययस्य प्रतीकारः प्रत्येकं संस्कृतविद्भिः कर्त्तव्यत्वेनावशिष्यते। अस्य भ्रमस्य वात्यायां न केवलं सामान्या जना एव मार्गाद् विस्मरन्ति, प्रत्युत महामनस्विनो विद्वांसोऽपि इमामेव दशामनुभवन्ति। तथाचोक्तम् "अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमिलिताः"।

अद्यत्वे केचन शिक्षाशास्त्रिणः कतिपयैः प्रमाणाभासैः संसाधयन्ति यत् "संस्कृतभाषा" लोक-भाषा पदं कदापि नालङ्कृतवती"। प्रमाणयन्ति ते तत्र नाटकानि। यदि 'संस्कृतभाषा' 'लोकभाषा' अभविष्यत्तदा स्त्र्यादिपात्रमपि तयैव भाषया व्यवहरदभविष्यत्, परन्तु तथा नास्तीति प्रतीयते स्पष्टं यत् शिष्टानामेव 'भाषा' संस्कृतभाषाऽऽसीत् न सर्वसाधारणी।

अस्मिन्निबन्धे मया प्रयत्यते संस्कृतभाषाया लोकभाषात्वसाधनाय। ये किल गवेषका नाटकं पुरस्कृतत्य संस्कृतभाषया लोकभाषात्वं प्रत्याचक्षते ते

मया प्रार्थ्यन्ते विनयतो यत् किम्भवन्तः केवलं नाटकमेवावलोकितवन्तः सन्तिः, अहोस्विद् अन्यानपि संस्कृतग्रन्थान् सम्यक् प्रेक्षितवन्तः ? यदि प्रेक्षितवन्तः सन्ति तदा महर्षिणा यास्केन किमपराद्धम् ? यत् तं भवन्तो विस्मरन्ति ? महर्षिणा यास्केन निरुक्ते वैदिकसंस्कृताद् भिन्नं सामान्यजनवचनं ( बोली ) "भाषेतिपदेन व्यपदिष्टं वर्तते । तथा तस्यां भाषायां व्यवहृतेभ्यो धातुभ्यो वैदिककृदन्तशब्दानां व्युत्पादनं विहितमस्ति-"भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते" ( निरुक्त-२-२ ) निरुक्तकारः स्वसमये विभिन्नेषु प्रान्तेषु संस्कृतशब्दानां समुपलभ्यमानानां विभिन्नानां रूपाणामेवं विभिन्नेष्वर्थेषु प्रयोगस्योल्लेखं विदधत् कानिचिदुदाहरणानि प्रतिपादितवानस्ति-**"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकार एव एनमार्या भाषन्ते शव इति" 'दातिर्लवनार्थः प्राच्येषु दात्रमुदीच्येषु"** ( निरुक्तम्-२-२ ) पच्चनदस्य ( पञ्जाब ) पश्चिमोत्तरप्रदेशेः ( कम्बोज ) महर्षेर्यास्कस्योपरितनस्य ग्रन्थस्य सम्यगवधानेन इदं स्पष्टं भविष्यति यत् विक्रमात् प्रायः वर्षाणां सप्तशत्याः पूर्वं 'संस्कृतभाषा' 'लोकभाषा' आसीदेव । अन्यथा तत्तत्प्रान्तेषु शब्दानां रूपान्तरम्, अर्थान्तरञ्च कथमपि नोपद्येत ।

महर्षियास्कादनन्तरं महर्षिपाणिनेः साहित्यस्य पर्यवेक्षणेनापि अवगम्यते यद् विक्रमाद् वर्षाणां पञ्चशत्याः पूर्वमपि संस्कृतभाषा लोकभाषा पदं पूर्ववदेव भूषितवती आसीत् ।

पाणिनिरपि 'संस्कृतभाषां' भाषापदेन व्यवहरन्नासीत्-"भाषायां सदवसश्रुवः" ( ३-१-१०८ ) दूराद् यस्याह्वानं क्रियते तस्य नाम्नोऽन्त्यवर्णस्य प्लुतिर्विधीयते महर्षिणा पणिनिना "दूराद्धूते च (८।४।८४)" 'आगच्छ देवदत्त" अत्र देवदत्तस्याकारो विधातव्यः प्लुतः । एवं शिष्यस्याभिवादनानन्तरं प्रत्यभिवादं कुर्वता गुरुणा शिष्यस्य नाम्नोऽन्त्यः स्वरः प्लुतः कर्त्तव्यः-"प्रत्यभिवादे शूद्रे" ( ८-२-८२ ) "आयुष्मानेधि देवदत्त३" अत्र देवदत्तस्याकारः प्लुतः कर्त्तव्यः । उपरितनानां नियमानां पालनं तदैव स्यात् यदा भाषा ( बोली ) वस्तुतः सर्वव्यवहारविषया स्यात् । आचार्यपाणिनिः तेषां संस्कृताभणकानां सिद्धिं कृतवानस्ति येषां प्रयोगस्तस्मिन् समये उत्तरप्रदेशे तथा पूर्वप्रदेशे सर्वसाधारणव्यवहार विषय आसीत् । "तत्र तेनेदमिति सरूपे" (२-२-२७) इत्यनेन सूत्रेण-'दण्डादण्डि' ( लाठालाठी ) 'मुष्टीमुष्टि' ( मुक्कामुक्की ) 'हस्ताहस्ति ( हाथाहाथी ) "चर्मोदरयोः पूरेः" ( ३, ४, ३१ ) उदरपुरं भुङ्ते ( पेटभर खाना ) इत्यादीनि अनेकानि उदाहणानि अस्य विषयस्य साक्षीणि सन्ति, यत् 'संस्कृतभाषा' पाणिनिकाले 'लोकभाषा' आसीत् । अन्यथा अमीषामुदाहरणानां । सिद्धेः कोपयोगिता आसीत् लोकस्य ?

क्रमशः पाणिनेः पश्चात् प्रचलन्ती दृष्टिः पतति पतञ्जलौ । महर्षिः पत-

ञ्जलिः पाणिनेरष्टाध्यायीमुपक्रम्य सर्वाङ्गपूर्णं महाभाष्यं लिखितवानस्ति। तस्मिन् एकस्य सूतस्य वैयाकरणस्यानुपमः सम्वादः सन्दृब्धो वर्तते—"अजेर्व्यघञपोः" (पा०सू० २-४-६) इतिसूत्रे एवं हि कश्चिद् वैयाकरण आह—'कोऽस्य रथस्य प्रवेता' इति। सूत आह-"अहमायुष्मन् ? अथ रथस्य प्राजिता" इति। वैयाकरण आह-अपशब्द'इति। सूत आह "प्राप्तिज्ञो देवानां प्रियः, नतु इष्टिज्ञः, इष्यत एतद्रूपम्" इति। वैयाकरण आह–"अहो खल्वेतेन दुरुतेन बाध्यामहे' इति। सूत आह–"न खलु वेञः सूतः, सुवतेरेव सूतः, यदि सूवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम्" इति अस्मिन् सम्वादे वैयाकरणेन पृष्टः सूतः समाधौ प्रवेता इत्यस्य स्थाने प्राजितेति प्रोक्तमतः क्रुद्धेन वैयाकरणेन अधिक्षिप्तेन सूतेन वैयाकरणोऽपि अधिक्षिप्तः। पुनः क्रुद्धेन बैयाकरणेन दुरुतेनेति पदेन सूतोऽधिक्षिप्तः। सम्भवतो वैयाकरणेनेदं ज्ञातं भवेद् यत् सूपसर्गात् वेञ्धातोः 'सूत' इति निष्पन्नमस्ति। परन्तु अयं प्रमादो-बैयाकरणस्यासीत् इति संकेतयन् सूत आह यत् सूधातोः 'सूतः' निष्पन्नोऽस्ति, तस्य च यदि निन्दार्थे दुःसूतेनेति दुसूतेनेति वक्तव्यम् इति सूतस्य तात्पर्यम्। अनेन प्रसङ्गेन इदं सिद्धम्भवति यद् यस्मिन् काले एकः साधारणः सूतः प्रमादार्थं वैयाकरणमधिक्षिपति तस्मिन् काले संस्कृतभाषायाः किं स्थानमासीदिति।

काष्ठवाहकस्य **"भारो न बाधते राजन्! यथा बाधति बाधते"** तन्तुवायस्य **"कवयामि वयामि यामि"** इति विद्वद्दोषदर्शकाभ्यां वचनाभ्यामपि निश्चेतुं शक्यते यत् संस्कृतभाषा लोकभाषाऽऽसीत्। आधारभूतैः यैर्नाटकैः संस्कृतभाषायां लोकभाषापदमुच्छिद्यते तेष्वेव नाटकेषु कुत्रचित् आत्रेय्याः निगमान्तविद्याध्ययनार्थं वाल्मीकिपार्श्वात् अन्यत्र गमनमुट्टङ्कितमस्ति।

मन्यतां तावत् नाटकस्याभ्युदयकाले कदाचित् संस्कृतभाषायाः तत्स्थानं न भवेत् तथापि ततः पूर्वं लोकभाषा संस्कृतभाषैवासीत्। वस्तुतः श्रव्यकाव्यापेक्षया दृश्यकाव्येषु वैचित्र्यवर्णनाय नाटकेषु स्त्र्यादिपात्रं संस्कृतं न व्यवहरति, अपि तु प्राकृतम्। यदि स्त्र्यादिपात्राणां संस्कृतानभिज्ञतैव प्राकृतभाषणे कारणं स्वीक्रियते तदा तु संस्कृतभाषकपात्रभाषाणानन्तरं प्राकृतभाषणमपि असम्भवि, यतो हि प्रधानपात्रस्याशयमजानेनाप्रधानेन किं वक्तव्यं स्यात्। वैचित्र्यसम्पादनायैव शौरसेनी मागधीत्यादिभाषणामुपयोगो दृश्यते, यो नाटकलेखकानां कश्चन सम्प्रदायोऽस्ति। अयं वैचित्र्यबोधनप्रकारः अङ्ग्ललेखकेष्वपि लभ्यते, अप्रधानपात्रं संस्कारहीनमाङ्गलवचो वदति प्रधानं च संस्कृतम्।

भारतस्य संस्कृतभाषानुरागिणो राजानः 'स्वस्वान्तःपुरेषु संस्कृतेनैव व्यवहर्त्तव्य'मिति नियमं कृतवन्त आसन्। इदं निर्दिशन् राजशेखरो नियामकेषु तेषु राज्ञो विक्रमस्य नामाङ्कितवानस्ति। उपरितनैः प्रमाणैः अयमेव

निष्कर्षो भवति यद् विक्रमाद् अनेकेभ्यः सम्वत्सरेभ्य पूर्वतः आरभ्य द्वादशी शताब्दीं यावत् संस्कृतभाषा लोकभाषा आसीत् ।

## व्याकरणनामसंख्याविमर्शः

भारतीयेतिहासानुसारं सर्वासां विद्यानामादिः प्रवक्ता ब्रह्मदेव एवास्ति। अतो व्याकरणशास्त्रस्यापि आदिप्रवक्ता ब्रह्मैवास्ते। तथा चोक्तम् ऋक्तन्त्रे—**ब्रह्मा बृहस्पतये, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः** इति। अर्वाचीना ग्रन्थकारा अष्टानां शाब्दिकानां मुल्लेखं कुर्वन्ति—

ब्राह्ममैशानमैन्द्रं च प्रजापत्यं बृहस्पतिम् ।
त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्टकम् ॥

गीतासारे, महाभारतस्य निर्माणप्रसङ्गे च नवानां व्याकरणनामुल्लेखो विद्यते यथा—

अष्टादश पुराणानि नव व्याकरणानि च ।
निर्मथ्य चतुरो वेदान् मुनिना भारतं कृतम् ॥

तत्त्वविधिनामके वैष्णवग्रन्थेऽपि नवानामेव व्याकरणमुल्लेखोऽस्ति—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम् ॥

तत्र पाणिनीयव्याकरणस्यैव सर्वोत्कृष्टत्वं सर्वाङ्गीणत्वं च वर्तते। तत्रापि स्फोटवादस्य प्रामुख्यमस्ति। अतोऽनेकशास्त्राचार्येण परमोत्साहिना पण्डित-श्रीकृष्णमणित्रिपाठिना वैयाकरणनिकाये स्फोटवादविवेचनं विहितम्, प्राक्कथने च प्रसङ्गतो व्याकरणज्ञानोपयोगिनः अत्यावश्यका विषया अपि विवेचिता सन्तिः। मन्येऽनेन विवेचनकौशलेन व्याकरणविषयकपदार्थजिज्ञासूनां विपश्चितामन्ते-वसताञ्च महांल्लाभो भविष्यति। अतो ग्रन्थस्यास्योपयोगित्वं सार्वजनीत्वत्वञ्चा-वेक्ष्यहमपि सम्पादने प्रवृत्तः। आशासे गुणग्रहणैकपक्षपातिनः पाठकाः, सहृदया विद्वांसश्च भ्रमप्रमादादिना क्वचन जायमानान् मुद्रणादिदोषान् विशोध्य नूनमनु-कम्पयिष्यन्ति, सूचयिष्यन्तीति मां येनाग्रिमे संस्करणे तस्य सशोधनं परिवर्तनं वा नूनं संभवेदिति—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनाश्चैव समादधति सज्जनाः ॥

| व्यवस्थापकः | | विनीतः |
|---|---|---|
| काशिक भारतीयसाहित्यशोधसंस्थानस्य | } | आचार्य श्रीपति अवस्थी |

## वैयाकरणनिकाये स्फोटवादविवेचनस्य विषायानुक्रमणिका

# प्राक्कथनम्

वन्दे कवीन्द्रवक्त्रेन्दुलास्यमन्दिरनर्तकीम् ।
देवीं सूक्तपरिस्पन्दसुन्दराभिनयोज्ज्वलाम् ॥

भाषा हि विचाराणामभिव्यक्तेः माध्यममस्ति । भाषाविचारयोः क्षेत्रं सर्वदा विकासशीलं वर्तते । तयोः तारतम्यप्रदर्शिकाऽस्ति विद्या व्याकरणम् । व्याकरणमेकं शास्त्रमस्ति, यस्य स्वकीयं स्वतन्त्रमस्तित्वमस्ति । संस्कृतस्य व्याकरणं हि सर्वाङ्गपूर्णं वरीवर्ति । संस्कृतभाषाया व्याकरणस्य चिन्तनधारा स्वतन्त्राऽस्ति । भारतीयवाङ्मयानुशीलनेन प्रतीयते यत् सृष्टिकर्तुर्विधातुरारभ्य इन्द्रादिदेवानां ज्ञानवतामृषीणां महर्षीणां च समयं यावद् व्याकरणशास्त्रस्य विभिन्ना वीथयः प्रकाशे समागताः, गार्ग्य-गालव-शाकल्य-शाकटायनप्रभृतिभि-र्भाषाशास्त्रिभिः प्रवर्तितस्य व्याकरणस्य यत् स्वरूपं जनतासु प्रसृतमासीत् तत् पाणिनि-कात्यायन-पतञ्जलीनां सम्मुखे समागतम् । एभिः त्रिभिः मुनिभिः तदेव व्याकरणस्वरूपं स्वस्वकृतिषु अवतारितम् । तदनन्तरं संस्कृतस्यानेकैः विद्वद्भिः वृत्ति-व्याख्या-टीकोपटीकादि-द्वारा व्याकरणज्ञानस्य परम्परा अग्रेसरी कृता ।

## संस्कृतोदयविमर्शः

भारतीयवाङ्मयानुसारं संस्कृतभाषा हि विश्वस्य आदिभाषाऽस्ति । संस्कृतवाङ्मयं च समस्तस्य विश्वस्य प्राचीनवाङ्मयापेक्षयाऽतिविशालं प्राचीनतमं च विद्यते । संस्कृतवाङ्मये व्याकरणशास्त्रस्य नैजं महत्त्वपूर्णं स्थानमस्ति । तस्य यद् वाङ्मयमुपलभ्यते तदपि विस्तृतमतिमहत्त्वपूर्णं सर्वा-ङ्गीणं चास्ति ।

भारतीया ऋषयो महर्षयो वैदिका ब्राह्मणा विचारकाश्च विद्वांसो वेदस्या-पौरुषेयत्वे सहमताः सन्ति । परमकृपालुना भगवता प्रतिकल्पारम्भे यदृच्छया लोकविधातारं ब्रह्माणं सृष्ट्वा तस्मै धर्मकामार्थमोक्षाख्यपुरुषार्थचतुष्टयसाध-कान् साङ्गांश्चतुरो वेदान् उपदिदेश[1] । ब्रह्मणापि तदुपदेशक्रमेणैव जगत् सृष्ट्वा तपस्तप्यद्भ्यः ऋषिभ्यः अनाद्यनन्तस्य नित्यवेदस्य ज्ञानं प्रदीयते । तत एव च

---

१. यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।

( श्वे० उ० ६।१८ )

वेदज्ञानात् लोकस्य सर्वे व्यवहाराः प्रचलितास्तत्तज्जात्यनुगुणानि कर्माणि च प्रवृत्तानि ।[१]

भारतीयेतिहासस्याद्वितीयो ज्ञाता ब्रह्मविद्वरिष्ठो भगवान् कृष्णद्वैपायनो व्यासो लिखति यत् तपःशक्त्या सम्पन्नो भूत्वा ब्रह्मदेवः आद्यन्तरहितां वेदमयीं वाणीमुच्चारितवान्, यतः सृष्टिक्रमानुसारं सर्वेषां पदार्थानां नाम, प्राणिनामनेकविधं रूपं तथा तेषां कर्मणां विधानं च जातम्[२] । भारतीयवाङ्मयानुसारं लौकिकभाषाया विकासो वेदादेवाभवत् । तथा चोक्तं स्वायम्भुवमनुना मनुस्मृतौ यत् सृष्टेरारम्भकाले ब्रह्मणा समेषां पदार्थानां नामानि, विभिन्नानि कर्माणि, रचना, विशेषकर्माणि च वैदिकैरेव शब्दैर्निर्धारितानि[३] । एवं वेदेषु शतशः शब्दानां निरुक्तेः, पदान्तरसान्निध्याच्च बहुविधानामर्थानां निर्देश उपलभ्यते । तेषामेवाधारेण लोकेषु पदार्थानां संज्ञाः क्रियन्ते । यद्यपि वेदेषु समस्तानां नाम्नां धातूनाञ्च प्रयोगा नोपलभ्यन्ते, नापि तेषां सर्वासु विभक्तिषु सर्वेषु च वचनेषु रूपाणि वा प्राप्यन्ते । तथापि क्वचित् प्रयुक्तनामाख्यातपदेभ्य मूलशब्दान् कल्पयित्वा समस्तव्यरहारोपयोगिनां नामाख्यातपदानां सृष्टिर्जाता । शब्दान्तरेषु च क्वचित् प्रयुक्तविभक्तिवचनानुसारं प्रत्येकनाम-धातूनां तत्तद्

---

१. ( क ) ऋषीणां तपतां तेषां तपः परमदुर्लभम् ।
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य च ॥
( मत्स्यपुराणे १४४।६२ )

( ख ) त एते ऋषयो वेदं स्वं स्वं व्यसन्ननेकधा ।
शिष्यैः प्रशिष्यैः तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥
( श्रीमद्भागवते १।४।२३ )

( ग ) युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥
( वेदचयने ४ )

( घ ) हरिरप्याह वाक्यपदीये—
प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥ ( २।१९ )

२. अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
( महाभारतस्य शान्तिपर्वणि २३२।२४ )

३. सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ ( मनुस्मृतौ १।२१ )

विभक्ति-वचन-रूपाणि निर्धारितानि। एवमृषिभिः आरम्भे वेदाधारेण सर्व-व्यवहारोपयोगिन्या अतिविस्तृताया भाषाया उपदेशः कृतः। सैव भाषा विश्वस्य आदिव्यवहारिकभाषाऽभवत्। स्वयमेव वेदो ब्रवीति यद् देवा यां दिव्यां वाचं प्रकटयन्ति, साधारणा जना अपि तामेव वाणीं ब्रुवन्ति[१]। एतत्सिद्धान्तानुसारं प्रारम्भिकलौकिकभाषायां वेदस्य सर्वे शब्दा विद्यमाना आसन्, ये साम्प्रतं वैदिका एव मन्यन्ते। एतेन स्पष्टं भवति यद् लौकिकवैदिकवाक्येषु पदानां भेदो नास्ति, केवलं वर्णानुपूर्व्या नित्यत्वानित्यत्वयोरेव भेदो वर्तते। अत एव महर्षिणा जैमिना प्रोक्तं यत् यागादिकर्मविधायकवाक्यस्य श्रुतौ समुपलम्भात्, लौकिक-वैदिकपदयोर्विभागाभावाच्च तेषां पदानामर्थ एक एव[२]। तस्य सूत्रस्य व्याख्यानं कुर्वता शवरस्वामिना कथ्यते यद् ये लौकिकाः शब्दाः सन्ति, त एव सन्ति वैदिकाः तथा त एव सन्ति तेषामर्थाः[३]। संस्कृतवाङ्मये सर्वसम्मतः सिद्धान्तोऽस्ति, यत् प्रत्येकविद्यायाः प्रथमः प्रवक्ता आदिविद्वान् ब्रह्मैवास्ति[४]। वर्तमानकालापेक्षया प्राचीन-प्राचीनतर-प्राचीनतमकालेषु संस्कृतभाषायाः क्षेत्रमतिविशालमत्यन्तं विस्तृतं चासीत्। तथाहि भगवान् पतञ्जलिः महाभाष्ये—

सर्वे खल्वेते शब्दा देशान्तरे प्रयुज्यन्ते, न चोपलभ्यन्ते, उपलब्धौ यत्नः क्रियताम्। महान् हि शब्दस्य विषयः—सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधार्थर्वणो वेदः, वाको वाक्यम्, इतिहासः, पुराणम् इत्येतावान् शब्दस्य प्रयोगविषयः ( १।१।१ ) महाभारते[५] पुराणे[६] च।

एतेन स्पष्टं प्रतीयते यत् कस्मिंश्चित् समये संस्कृतभाषायाः प्रयोगक्षेत्रम् अत्यन्तं विशालं विस्तृतं चासीत्। यदि विश्वस्य समस्तानां भाषाणां नवीन—

---

१. देवीं वाचमजनयन् देवास्तां विश्वरूपा पशवो वदन्ति।

( ऋग्वेदे ८।१००।११ )

२. प्रयोगचोदनाभावादर्थैकत्वमविभागात् ( पू० मी० १ । ३ । ३० )

३. य एव लौकिकास्त एव वैदिकास्त एव च तेषामर्थाः।

४. ( क ) ब्रह्मबृहस्पतये प्रोवाच ( ऋक्तन्त्रे प्रथमे प्रपाठके )

( ख ) तस्माज्जगद्धितायेदं ब्रह्मणा रचितं पुरा ( नारदसंहिता १ । ७ )

( ग ) तद्वैतद् ब्रह्मा प्रजापतये उवाच ( छा० उ० ८ । १५ )

( घ ) एष धर्मः कुरुश्रेष्ठ ! कथितः परमेष्ठिना ( म० भा. शा. प. १०९।११ )

५. एकविंशतिसाहस्रमृग्वेदं मां प्रचक्षते।

सहस्रशाखं यत् साम ये वै वेदविदो जनाः॥ (म. भा. शा. प. ३४२।९७)

६. सामवेदं सहस्रेण शाखानां प्रविभेद सः। ( कू० पु०, पू० ख० ५२ । २० )

प्राचीनस्वरूपस्य तुलना क्रियेत तर्हि स्पष्टं स्यात् यद् विश्ववर्तिनीनां समस्तानां भाषाणामादिमूलं संस्कृभाषैवासीत्। आसां भाषाणां नवीनस्वरूपापेक्षया आसां प्राचीनस्वरूपं संस्कृतभाषाया अधिकं समीपमासीत्, परं मनुष्याणां विस्तारेण साकं देशकालयोः परिस्थितेश्च विपर्ययात् संसारे यथा यथा उच्चारणाशुद्धिवृद्धिः समारब्धा तथा तथा संस्कृतभाषायाः प्रयोगक्षेत्रमपि सङ्कुचितं भवितुमारब्धम्। संस्कृतभाषा हि प्राकृतभाषातोऽपि प्राचीनाऽस्ति तथा प्राकृतं संस्कृतस्यास्ति विकृतिः। अत एव शब्दशास्त्रस्य प्रामाणिक आचार्यो भर्तृहरिः ब्रवीति स्वकीये वाक्यपदीये—

दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ( १ । ११५ ) संस्कृतनामकरणम् भारतीयेतिहासानुसारं देववाण्या नामास्ति संस्कृतम्। प्राक्काले देववाणी अव्या—कृता = प्रकृतिप्रत्ययविभागरहिता आसीत्। अस्या उपदेशः प्रतिपदपाठ-द्वारा क्रियतेस्म। एवं तस्या ज्ञाने परिश्रमाधिक्यं कालक्षयश्च जायतेस्म। अतो दैवै-रिन्द्रोऽभ्यर्थितः यद् भगवन्! भवता शब्दोपदेशस्य काऽपि सरला प्रक्रिया निर्दिश्यतां ययाऽल्पपरिश्रमेणाल्पसमये सम्यक् शाब्दबोधो भवेत्। एवं देवानां प्रार्थनया महेन्द्रो देवभाषायाः प्रत्येकशब्दमाध्यमेन विभागं विधाय प्रकृतिप्रत्यय-विभागरूप-सम्पादनद्वारा देववाणीं संस्कृतवान्[1]। अतएव आचार्येणदण्डिना स्वकीये काव्यादर्शेऽभिहितमस्ति, यन्महर्षयः पुरा देवानां वाचं संस्कृतमन्वाख्यातवन्तः।[2] भारतीये आर्षवाङ्मये देववाण्या कृते संस्कृतशब्दस्य व्यवहारो वाल्मीकीये रामायणे, भरतमुनेः नाट्यशास्त्रे चोपलभ्यते। रामायणे तद्विशेषणं मानुषीति लिखितमस्ति।[3] यास्काचार्यो महर्षिः पाणिनिश्च लौकिकसंस्कृतस्य कृते भाषा शब्दव्यवहारं कुरुतः। एतेन स्पष्टं प्रतीयते यत्तत्समये संस्कृतं जनसाधारणस्य भाषाऽऽसीत्। तथा तेनैव परस्परं व्यवहरन्तिस्म लोकाः।

---

१. ( क ) वाग् वै पराच्यव्याकृतावदत्। ते देवा इदमब्रुवन्, इमां नो वाचं व्याकुर्विति तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् (तै. सं. ६। ४। ७)

( ख ) तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्। ( सायणः ऋग्भाष्यस्योपोद्घाते )

( ग ) संस्कृते प्रकृतिप्रत्ययादिविभागैः संस्कारमापादिते ( शिक्षाप्रकाशे )

( घ ) बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्द-पारायणं प्रोवाच ( महाभाष्ये १। १। १ )

२. संस्कृतं नाम दैवी वाग् अन्वाख्याता महर्षिभिः। ( १३। ३ )

३. ( क ) वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्। (सु० का० ३०। १७)

( ख ) तस्माद् ब्राह्मण उभयीं वाचं वदति दैवीं च मानुषीं च करोति। ( काठकसंहिता १४। ५ )

## व्याकरणशास्त्रस्येतिहासदिग्दर्शनम्

जगद्विधातुर्ब्रह्मण आरभ्याद्यपर्यन्तं विपश्चितां मतमस्ति यत् विश्वस्मिन् यानि ज्ञानानि प्रवृत्तानि तेषां समेषां मूलं वेद एवास्ति। अत एव स्वायम्भुवेन मनुना वेदः सर्वज्ञानमयः प्रोक्तोऽस्ति-**सर्वज्ञानमयो हि सः** ( म. स्मृ. २।७ ) एतत्सिद्धान्तानुसारं व्याकरणशास्त्रस्यादिमूलमपि वेद एवास्ति। वैदिक-मन्त्रेषु बहूनां पदानां व्युत्पत्तयः समुपलभ्यन्ते। शब्दशास्त्रस्य प्रमाणभूत आचार्यो भगवान् पतञ्जलिः व्याकरणाध्ययनस्य प्रयोजनं निर्दिशन् 'चत्वरि शृङ्गा ( ऋ. वे. ४।५८।३ ), चत्वारि वाक् ( १।१६४।४५ )' इत्यादि-मन्त्राणां व्याख्या व्याकरणशास्त्रपरकैव कृतास्ति। उपलब्धवैदिकपदपाठस्य रचनातः पूर्वमेव व्याकरणशास्त्रं पूर्णतां प्राप्तमासीत्। प्रकृति-प्रत्यय-धातूपसर्ग-समासपदघटित-पूर्वोत्तरपदविभागादि च पूर्णतया निर्धारितमासीत्। वाल्मीकिरामायणतो ज्ञायते यत् श्रीरामस्य समये व्याकरणशास्त्रस्य सुव्यवस्थितं पठनपाठनं भवतिस्म। तथा चोक्तं श्रीरामेण हनुमतः साक्षात्कारसमये लक्ष्मणं प्रति श्रीहनुमन्तमुद्दिश्य। लक्ष्मण! येन ऋग्वेदस्य शिक्षा नावाप्ता, यजुर्वेदस्याभ्यासो न कृतः यश्च साम-वेदस्य विद्वान् नास्ति स एवंविधसुन्दरभाषायां वार्तालापं कर्तुं न शक्नोति। अनेन निश्चयं बहुविधं व्याकरणस्याध्ययनं कृतमस्ति यतो बहुभाषणेऽपि अस्य मुखादेकाऽपि अशुद्धिर्न जाता, नापि मुखे नेत्रयोः, ललाटे भ्रुवोः अन्येष्वप्यङ्गेषु कश्चन विकारो जातः[1]। अयं संस्कारक्रमसम्पन्नामद्भुतां तथा हृदयानन्ददायिनीं कल्याणमयीं वाणीमुच्चारयति। महाभारतयुद्धसमकालिके यास्कीये निरुक्ते व्याकरणप्रवक्तॄणां बहूनां वैयाकरणानामुल्लेखो दृश्यते[2]। समस्तनामशब्दानां धातुभिर्निर्देशकं शाकटायनव्याकरणमपि प्रणीतमासीत्। महाभाष्यकारस्य पतञ्जलिमुनेः लेखानुसारं पुराकाले व्याकरणशास्त्रस्य पठनपाठनं प्रचलित बभूव।[3] एतैः प्रमाणैः सिध्यति यत् त्रेतायुगस्यारम्भे व्याकरणशास्त्रं ग्रन्थ-रूपेण सुव्यवस्थितं जातमासीत्।

---

१. ( क ) नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहुव्याहरतानेन न किञ्चिदपभाषितम्॥ ( कि० का० ३।२९ )

( ख ) न मुखे नोभयोश्चापि ललाटे च भ्रुवोस्तथा।
अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित्॥ ( ३।३० )

( ग ) संस्कारक्रमसम्पन्नामद्भुतामविलम्बिताम्।
उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम्॥ ( ३।३२ )

२. न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ( निरुक्ते १।१२ )

३. पुराकल्पे एतदासीत्, संस्कारोत्तरकालं ब्राह्मणा व्याकरणमधीयतेस्म। (१।१।१)

## व्याकरणप्राचीनत्वम्

शब्दशास्त्रस्य कृते व्याकरणशब्दस्य प्रयोगो रामायणे[1], गोपथब्राह्मणे[2], उपनिषदि[3], महाभारते[4] च समुपलभ्यते। शिक्षा-व्याकरण-निरुक्त-छन्दः-कल्प-ज्यौतिषाणीति षड् वेदस्य षडङ्गानि प्रोच्यन्ते। गोपथब्राह्मणे षडङ्गे व्याकरणस्य निर्देशोऽस्ति। देवलेनापि षडङ्गेषु व्याकरणस्य गणना कृताऽस्ति[5]। पतञ्जलि-मुनिनाऽपि षडङ्गाध्ययनस्यानिवार्यतायामागमवचनमुद्धृतमस्ति।[6] एवं न केवलं व्याकरणशास्त्रस्य प्राचीनत्वं सिध्यति, अपितु पाणिनीयतन्त्रे स्मृतानामनेकेषा-मन्वर्थसंज्ञा अपि अतिप्राचीनाः प्रतीयन्ते। यथा—

को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्, किं लिङ्गम्, किं वचनम्, का विभक्तिः, कः प्रत्ययः, कः स्वर उपसर्गो निपातः, किं वै व्याकरणम्, को विकारः, को विकारी, कति मात्रः, कति वर्णः, कत्यक्षरः, कति पदः, कः संयोगः, किं स्थान-नादानुप्रदानानुकरणम्? (गो. ब्रा. पू. १।२४)

मैत्रायणीसंहितायामपि व्याकरणप्रसिद्धविभक्तिसंज्ञाया अपि उल्लेखो विद्यते[7]। ऐतरेयब्राह्मणेऽपि विभक्तिरूपेण सप्तधा विभक्ताया वाण्या उल्लेखो विद्यते[8]। अतो व्याकरणशास्त्रस्य प्राचीनता विषयेऽसंशयं वक्तुमुचितं यत् साम्प्रतं मूलवेदातिरिक्तं यावद् भारतीयं वाङ्मयमुपलभ्यते तत्र व्याकरणशास्त्रस्योल्लेखो नूनमवाप्यते। अतो हि सुव्यक्तं वक्तुं शक्यते यद् मूलवेदातिरिक्त–भारतीयार्ष-वैदिकवाङ्मयस्य रचनातः पूर्वं व्याकणशास्त्रं पूर्णतया व्यवस्थितं 'सत् पठन-पाठनयोः व्यवहृतश्चासीत्।'

निरुक्ते–नामाख्यातोपसर्गनिपाताश्चेति वैयाकरणाः। फलतो व्याकरशास्त्रस्य प्राचीनता, वेदनिर्दिष्टता, वेदाङ्गमुख्यता च स्पष्टं प्रमाणिता भवति।

## व्याकरणस्य वक्ता, प्रवक्ता, संस्कर्ता च

भारतीयैतिह्यानुसारं सर्वासां विद्यानामादिर्वक्ता ब्रह्मैवास्ते। तदनुसारं व्याकरणशास्त्रस्यापि आदिवक्ताऽपि ब्रह्मैव प्रोच्यते। तथा चोक्तमृक्तन्त्रकारेण–

---

१. कि० का० ३।२९। २. गो० ब्रा० पू० १।२४। ३. मुण्डकोपनिषदि १।१।

४. सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥ (उ० प० ४३।६१)

५. शिक्षा-व्याकरण-निरुक्त-छन्दः-कल्प-ज्यौतिषाणि।
(वीरमित्रोदये परिभाषाप्रकाशे)

६. ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्च। (प. प. महाभाष्ये)

७. तस्मात् षड्विभक्तयः, प्रयाजाः सविभक्तयः कार्याः। (१।७।३)

८. सप्तधा वै वागभवत्। (७।७) यस्य ते सप्त सिन्धवः (ऋ. वे. १।१६४)

ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजः ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः ( ऋक्तन्त्रे १ । ४ )

ऋक्तन्त्रस्योपर्युक्तवचनानुसारेण व्याकरणशास्त्रस्य द्वितीयः प्रवक्ता बृहस्पतिः अङ्गिरामुनेः पुत्रत्वादयमाङ्गिरसनाम्ना प्रसिद्धः । ऐतरेयब्राह्मणेऽयं देवानां पुरोहित उक्तोऽस्ति[1] । मत्स्यपुराणे चायं वाक्पतित्वेन स्मृतोऽस्ति[2] । कोषेषु च सुराचार्यत्वेनाङ्कितो विद्यते। महाभारते चायं सर्ववेदाङ्गवक्ता प्रोक्तः ।

पतञ्जलेर्महाभाष्यतः प्रतीयते यद् बृहस्पतिना प्रतिपदपाठद्वारा इन्द्राय शब्दोपदेशः कृतः[3] । यथा बृहस्पतिः व्याकरणस्य प्रवक्ता तथैवेन्द्रोऽपि व्याकरणस्यास्ति संस्कर्ता । इन्द्रेण हि बृहस्पतेः प्रतिपदपाठद्वारा शब्दोपदेशविशेषज्ञानं प्राप्य पदानां प्रकृति-प्रत्ययविभागद्वारा शब्दोपदेशप्रक्रियायाः कल्पनया परम्परागतव्याकरणप्रयोगज्ञानस्य संस्कारो विहितः । इत्थमिन्द्रेण पुरागता अव्याकृता वाचः प्रकृतिप्रत्ययविभागादि-संस्कारयुक्ताः कृताः । दृष्ट्याऽनया व्याकरणज्ञानस्यादिमो वक्ता ब्रह्मा, प्रवक्ता बृहस्पतिः, संस्कर्ता च देवराज इन्द्रः । तदनन्तरं भरद्वाज-गार्ग्य-गालव-शाकल्य-शाकटायनप्रभृतयः ऋषिगणाः ब्राह्मणाश्च व्याकरणस्योपवक्तारः संस्कर्तारश्चाभवन् ।

## व्याकरणसम्प्रदायभेदः

व्याकरणशास्त्रे द्वौ सम्प्रदायौ प्रसिद्धौ स्तः । एकः ऐन्द्रसम्प्रदायः, द्वितीयो माहेश्वरसम्प्रदायः । वर्तमानप्रसिद्ध्यनुसारं कातन्त्रव्याकरणम् ऐन्द्रसम्प्रदायस्यास्ति, पाणिनीयव्याकरणं च माहेश्वरसम्प्रदायस्य । महाभारतस्य शान्तिपर्वणि शिवसहस्रनाम्नि लिखितमस्ति यद् बृहस्पतिवदेव शिवेनापि षडङ्गानां प्रवचनं कृतमासीत्—वेदात् षडङ्गान्युद्धृत्य ( २८३ । ९२ ) व्याकरण-वाङ्मये ऐन्द्रतन्त्रं सर्वतः प्राचीनमस्ति । तदनन्तरमनेकैः वैयाकरणैः व्याकरणशास्त्रस्य प्रवचनं कृतम् । तेषां प्रवचनभेदादनेकेषां व्याकरणग्रन्थानां रचनाऽजायत ।

माहेश्वर व्याकरणे त्रयाणां पाणिनि-कात्यायन-पतञ्जलीनां नामानि सुख्यातानि सन्ति । एतैः क्रमशः सूत्र-वार्तिक-महाभाष्याणि निर्माय व्याकरणशास्त्रस्य-मौलिकानां तथ्यानां विशदमुद्घाटनं विहितम्

---

१. बृहस्पतिर्वै देवानां पुरोहितः। ( ऐ० ब्रा० ८ । २८ )

२. भार्यामर्पय वाक्पतेः, सुराचार्यो बृहस्पतिः ।

३. ( क ) बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच ( १ । १ । १ )

( ख ) दिव्यं वर्षसहस्रमिन्द्रो बृहस्पतेः सकाशात् प्रतिपदपाठेन शब्दान् पठन् नान्तं जगाम। ( प्रक्रियाकौमुदी १ । ७ )

**व्याकरणशास्त्रविभागः**

वेदकालादद्यपर्यन्तं यावन्ति व्याकरणानि निर्मितानि तानि त्रिषु भागेषु विद्वद्भिर्विभाज्यन्ते—एकं छान्दसं व्याकरणम्, द्वितीयं लौकिकं व्याकरणम्, तृतीयं वैदिकलौकिकोभयव्याकरणं च।

( १ ) तत्र छान्दसं व्याकरणमस्ति प्रातिशाख्यादि, ( २ ) लौकिकं व्याकरणं कातन्त्रादि, ( ३ ) उभयविधं व्याकरणं च पाणिन्यादि व्याकरणं वर्तते।

**वैदिकव्याकरणसमीक्षा**

यद्यपि प्रातिशाख्ये तत्तच्चरणानां व्याकरणमस्ति तथापि तत्र मन्त्राणां पदपाठे जायमानानां विकाराणां प्राधान्यतयोल्लेखो विद्यते, येन पदपाठस्थमूलपदानां परिज्ञाने सौविध्यं स्यात्। एवं पदपाठ-क्रमपाठसम्बन्धिनामावश्यकनियमानां निर्देशो विद्यते।

यास्कमतानुसारं संहितायां मूलं पाठमाधारीकृत्य सर्वेषां चरणानां प्रातिशाख्यप्रवृत्तिर्जाता। अतः प्रकृतिप्रत्ययद्वारा पदसाधुत्वस्यावश्यकतैव नोपतिष्ठते। अत एव तेषां गणना प्रधानतया शब्दानुशासनग्रन्थेषु न जायते। साम्प्रतं निम्नाङ्कितानि षट् प्रातिशाख्यानि समुपलभ्यन्ते—

( १ ) ऋक्प्रातिशाख्यम्—शौनककृतम्।
( २ ) वाजसनेयप्रातिशाख्यम्—कात्यायनकृतम्।
( ३ ) सामप्रातिशाख्यम्—वररुचिकृतम्
( ४ ) अथर्वप्रातिशाख्यम्।
( ५ ) तैत्तिरीयप्रातिशाख्यम्।
( ६ ) मैत्रायणीयप्रातिशाख्यम्।

एतदतिरिक्तानां कियतां प्रतिशाख्यानामपि नाम प्राचीनग्रन्थेषु श्रूयन्ते, परं तानि नोपलभ्यन्ते साम्प्रतम्।

**व्याकरणशास्त्रप्रवक्तॄणां विभागः**

व्याकरणस्य प्रवक्तारो यावन्त आचार्याः सन्ति, ते भागद्वये विभज्यन्ते ( १) पाणिनितः प्राचीनाः ( २ ) पाणिनितोऽर्वाचीनाश्च संस्कृतव्याकरणशास्त्राध्ययनस्यारम्भो ब्रह्मतो भवति तथा तस्योत्तरोत्तरं विकाशोऽद्यपर्यन्तं गच्छति। अस्याः सुदीर्घपरम्परायाः ऐतिहासिकः केन्द्रविन्दुः आचार्यपाणिनिरेवास्ति। पाणिनिना हि स्वपूर्ववर्तिनां समस्तानां व्याकरणसम्प्रदायानां मन्थनं विधाय ते वै वैज्ञानिकरीत्या स्वस्यामष्टाध्याय्यां निहिताः। पाणिन्यनन्तरं व्याकरणस्य यावत्यः शाखाः पल्लविताः तासां सर्वासां मूल उद्गमः पाणिनीयव्याकरणमेवास्ति। अतो व्याकरणशास्त्रस्यैतिहासिकमध्ययनं पाणिनिं केन्द्रविन्दुं मत्वा प्रस्तूयते।

प्राक्पाणिनि–उत्तरपाणिनिक्रमेण व्याकरणस्य समस्ताम् आचार्यपरम्परां स्थापयित्वा व्याकरणशास्त्रस्य रूपरेखाया विचारः क्रियते ।

पाणिनितः प्राक् प्रायः त्रयोविंशतिराचार्या अभूवन्, येषां नामानि सन्ति–(१) इन्द्र–(२) वायु–(३) भरद्वाज–(४) भागुरि–(५) पौष्करसादि–(६) चारायण–(७) काशकृत्स्न–(८) वैयाघ्रपाद–(९) माध्यन्दिनि–(१०) रौढि–(११) शौनक–(१२) गौतम–(१३) व्याडि–(१४) आपिशलि–(१५) काश्यप–(१६) गार्ग्य–(१७) गालव–(१८) चाक्रवर्मण–(१९) भारद्वाज–(२०) शाकटायन–(२१) शाकल्य–(२२) सेनक–(२३) स्फोटायनाः ।

एते श्रेणीद्वये विभक्ताः सन्ति–प्रथमश्रेणीका द्वितीयश्रेणीकाश्च । तत्र प्रथमश्रेणीकास्ते वैयाकरणा आचार्याः सन्ति, ये पाणिनेः पूर्वं जाताः, किन्तु पाणिनेः अष्टाध्याय्यां तेषां नामानि नोपलभ्यन्ते तथा द्वितीयश्रेणीकास्ते आचार्याः सन्ति येषामुल्लेखः पाणिनिना स्वकीयायामष्टाध्याय्यां कृतोऽस्ति । अनया दृष्ट्या इन्द्रतो व्याडिपर्यन्तं त्रयोदश आचार्याः प्रथमश्रेणीकाः सन्ति । तदनन्तरं दश आचार्या द्वितीय-श्रेण्यां समागच्छन्ति । उभयोः सङ्कलनया पाणिनिपूर्वा त्रयोविंशतिरासन् आचार्या व्याकरणशास्त्रस्य ।

## अष्टाध्याय्यामनुक्ता आचार्याः

### (१) इन्द्रः

इन्द्रस्योल्लेखः प्रथमं जातोऽस्ति । तेन ब्रह्मबृहस्पतिद्वारा प्रवर्तितस्य व्याकरणस्य प्रकृतिप्रत्ययविभागद्वारा संस्कारः कृतः । व्याकरणशास्त्रजिज्ञासूनां देवानां प्रार्थनया ते व्याकरणज्ञाने दीक्षिताश्च कृताः । इन्द्रस्य जनकः कश्यपः, माता अदितिः, दक्षप्रजापतिश्च मातामह आसीत् । पुराणेषु महभारते च महेन्द्रस्यैकादश भ्रातर उक्ताः सन्ति, ते सर्वेऽदितेः पुत्रत्वादादित्याः प्रोच्यन्ते । तेषु विष्णुः कनिष्ठो बभूव । अत एव स इन्द्रावरजः कथ्यते । इन्द्रस्य पञ्च आचार्या आसन्–प्रजापतिः, बृहस्पतिः, अश्विनीकुमारौ मृत्युश्च । तत्रेन्द्रेण प्रजापतेः आत्मज्ञानमनुशीलितम्, बृहस्पतेः शब्दशास्त्रस्य अध्ययनं कृतम्, अश्विनीकुमाराभ्यामायुर्वेदज्ञानमवाप्तम्, मृत्युतः पुराणानां प्रवचनपरम्परा प्राप्ता ।

इन्द्रो हि स्वर्गनिवासिनां राजाऽस्ति अतोऽयं देवराजः कथ्यते । एष देवासुरसंग्रामेषु देवानां पक्षतः प्रधानो भवतिस्म । देवासुरसंग्रामे व्यापृतत्वादिन्द्रेण वेदो विस्मृतः । संग्रामे समाप्ते पुनरनेन विश्वामित्रतो वेदानामध्ययनं कृतम् । अयं हि वृत्रं निहत्य महेन्द्रनाम्ना प्रसिद्धिं गतः । इन्द्रस्य मन्त्रिपरिषदि एकसहस्रमृषय आसन् । अतोऽयं सहस्राक्ष उच्यते । सहस्रभगरूप-पौराणिक-

कथाया एतदेव मूलम् । अध्यात्मज्ञानप्राप्तये महेन्द्रेण शतवर्षपर्यन्तं ब्रह्मचर्यव्रतस्य पालनं कृतम् । अस्य भरद्वाजादयः अनेके शिष्या बभूवुः ।

वायुपुराणे लिखितमस्ति यदिन्द्रेण मृत्युतः पुराणविद्यामवाप्य वसिष्ठाय प्रवचनं कृतम्[1] । महाभारतस्य वनपर्वणि चेन्द्रगीतगाथाया उल्लेखो विद्यते, तथा अर्जुनस्येन्द्रतो दिव्यास्त्राध्ययनचर्चाऽस्ति[2] ।

एतेन दक्षप्रजापतितो वेदान्तदर्शनज्ञानं प्राप्तमासीत् । अयं दीर्घजीवी महान् ज्ञानी च बभूव । एतद्रचितमैन्द्रव्याकरणं साम्प्रतं नोपलभ्यते, केवलं तन्नाममात्रं श्रूयते । इन्द्रेण सर्वप्रथमं देवानां प्रार्थनया व्याकरणशास्त्रस्य रचना कृता । ततः पूर्वं संस्कृतभाषा अव्याकृता = प्रकृतिप्रत्ययविभागरहिता व्याकरण-सम्बन्धहीना आसीत् । एतेन सर्वप्रथमं प्रतिपदं प्रकृति-प्रत्यविभागादिविचारं विधाय शब्दोपदेशस्य प्रक्रिया प्रचलिता ।

**ऐन्द्रव्याकरणम्**

ऐन्द्रं व्याकरणं व्याकरणविषयकः प्रथमो ग्रन्थोऽस्ति, परं दौर्भाग्यादिदानीं तन्नोपलभ्यते । इदं व्याकरणमाकारेऽतिविशालमासीत् । द्वादशशताब्द्यां वर्तमानस्य महाभारतटीकाकर्तुर्देवबोधस्य निम्नाङ्कितेन पद्येन एन्द्रव्याकरणविस्तारकल्पना-ऽनायासेन स्पष्टी भवति । तदग्रे पाणिनि व्याकरणस्य गोष्पदत्वं प्रतीयते—

यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात् ।
पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे ॥

जैनशाकटायनव्याकरणे ( १ । २ । ३७ ) इन्द्रस्य मतमुद्धृतमस्ति, बौद्धे लङ्कावतारसूत्रेऽपि ऐन्द्रं शब्दशास्त्रं स्मृतमस्ति । यशस्तिलकचम्प्वामैन्द्रव्याकरणस्य निर्देशो विद्यते । हैमबृहद्वृत्त्यवचूर्णितोऽपि ऐन्द्रव्याकरणस्य सङ्केतो मिलति । अरबयात्रिणा अल्वेरुणिनापि निजयात्रावर्णने ऐन्द्रव्याकरणस्योल्लेखः कृतोऽस्ति ।

## ( २ ) वायुः

इन्द्रेण वाणीव्याकृतये = व्याकरणशास्त्रस्य सम्पादनसमये वायोः साहाय्य-मवाप्तमासीत् । अतः इन्द्रस्य व्याकरणरचनायां साहाय्यदाता वायुरशंसयमस्ति ऐतिहासिको विद्वान् । इन्द्रवायुभ्यां मिलित्वा प्रथमं व्याकरणशास्त्रस्य संस्कारः कृतः । अतो वाण्यै ऐन्द्रवायवः इति प्रयोग उपलभ्यते—वाग्वा ऐन्द्रवायवः

---

१. सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः ।
इन्द्रश्चापि वशिष्ठाय सोऽपि सारस्वताय च ॥ ( वा० पु० १०३ । ६० )

२. यमात् कुवेराद् वरुणादिन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान् पार्थो दिव्यान्यमितविक्रमः ॥ म०भा०व०प० ८८ । १३

( मै. सं. ४ । ५ । ८ ) वायुपुराणेऽयं सर्वशास्त्रविशारद उक्तोऽस्ति[१]। वायुना हि ब्रह्मणः सकाशात् पुराणस्य शिक्षाऽधिगता तथा तदेव पुराणज्ञानं तेन स्वशिष्याय उशनसे उपदिष्टम्। 'ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने। तस्माच्चोशसा प्राप्तं तस्माच्चापि बृहस्पतिः ॥' ( १०३ । ५८ ) वायुपुराणस्य रचयिता स एव वायुः श्रूयते–पुराणं संप्रवक्ष्यामि यदुक्तं मातरिश्वना ( १ । ४७ )। वायोः भार्या अञ्जनी पुत्रश्चाञ्जनेयो लोकविश्रुतो महाबली रामभक्तो हनुमान्[२]। हनुमानपि पितृवदेव शब्दशास्त्रस्य महान् वेत्ता बभूव यदर्थं स्वयमेव श्रीरामेणाभिहितम्[३]।

## ( ३ ) भरद्वाजः

ऋक्तन्त्रानुसारं व्याकरणशास्त्रस्य तृतीय आचार्यो भरद्वाजोऽस्ति। व्यकरणायुर्वेदयोर्ज्ञानमनेनेन्द्रतः[४] तथा पुराणज्ञानं तृणञ्जयतोऽवाप्तम्[५]। भरद्वाजो हि आङ्गिरसस्य बृहस्पतेः पुत्र आसीत्। वायुपुराणानुसारं भृगुणा भरद्वाजाय धर्मशास्त्रस्योपदेशो दत्तः[६]। भरद्वाजस्यानेके शिष्या आसन्, यान् स व्याकरणमपाठयत्[७]। वाल्मीकिरामायणस्यायोध्याकाण्डानुसारं भरद्वाजस्याश्रमः प्रयागस्य गङ्गायमुनयोः सङ्गमे शोभतेस्म[८]। महाभारतानुसारं भरद्वाजो धनुर्वेदस्य प्रवचनं कृतवानासीत्[९]। अपि च शान्तिपर्वानुसारं राजशास्त्रस्यापि प्रणयनं कृतवानासीद् भरद्वाजः[१०]।

## ( ४ ) भागुरिः

यद्यपि आचार्यस्य भागुरेर्नाम पाणिनेरष्टाध्याय्यां नोपलभ्यते तथापि

---

१. तत्राभिमानी भगवान् वायुश्चातिक्रियात्मकः।
वातारणिः समाख्यातः सर्वशास्त्रविशारदः ॥ २ । ४४

२. अञ्जनीगर्भसम्भूतो हनुमान् पवनात्मजः। ६० । ७३

३. नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहुव्याकरतानेन न किञ्चिदपभाषितम् ॥ ( वा. रा., कि. का. ३ । २९ )

४. इन्द्रो भरद्वाजाय ( ऋ. तं. १।४ )

५. तृणञ्जयो भरद्वाजाय ( वा. पु० १०३ । ६३ )

६. भृगुणाभिहितं शास्त्रं भरद्वाजाय पृच्छते ( शा० प० १८२ । ५ )

७. ऋषयश्च भरद्वाजात् ( १ । ४ )

८. गङ्गायमुनयोः सन्धौ प्रापतुर्निलयं मुनेः ( ५४ । ८ )

९. भरद्वाजो धनुग्रहम् ( शा० प० २२० । २१ )

१०. भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः।
राजशास्त्रप्रणेतारो ब्रह्मणा ब्रह्मवादिनः। ५८ । ३

भागुरेः व्याकरणविषयकमतप्रदर्शनार्थं वैयाकरणनिकाये निम्नाङ्कितं पद्यमत्यन्तं प्रसिद्धमस्ति—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ।।

एतदाधारेण अवाप्योरुपसर्गयोः अकारस्य लोपेन ( अवगाह ) वगाह—(अपिधान ) पिधानपदयोः सिद्धिर्भवति तथा हलन्तशब्देभ्यः आपं ( टापम् ) प्रत्ययं विधाय वाचा-निशा-दिशादीनां शब्दानां निष्पत्तिर्जायते ।

पाणिनिमहाभाष्यादपि प्रतीयते यत् कियन्त आचार्या हलन्तप्रातिपदिकेभ्योऽपि स्त्रीलिङ्गे टाप् प्रत्ययं मन्वते । पाणिनिना अजादिगणे कुञ्चा—उष्णिहा-देवविशाशब्दाः पाठिताः सन्ति । काशिकाकारेणपि एषु हलन्तशब्देषु टाप् स्वीक्रियते । आचार्यभागुरेः कतिपयानि वचनानि जगदीशतर्कालङ्कारेण स्वशब्द-शक्तिप्रकाशिकायामुद्धृतानि सन्ति ।

भागुरिशब्दे श्रूयमाण-तद्धितप्रत्ययानुसारं भागुरेः पितुर्नाम भागुरः प्रतीयते । महाभाष्ये ( ७।३।४५ ) भागुरी नाम श्रूयते तेन सम्भाव्यते यदियं भागुरेः विदुषी भगिनी वर्तते । अनया पण्डितया लोकायतशास्त्रस्य टीकापि कृतास्ति । तस्मात् भगुरस्यापत्यं पुमान् भागुरिः कन्या चेद् भागुरी । तथा च भागुरिः व्याकरणकर्ता, तत्स्वसा च लोकायतशास्त्रस्य प्रणेत्री प्रतीयते—वर्णिका भागुरी लोकायतस्य ।

बृहत्संहितानुसारं भागुरिः बृहद्गर्गस्य शिष्य आसीत् । भागुरेः मेरुपरिणाम-विषयकं मतं वायुपुराणे उपलभ्यते[1] । भागुरेः व्याकरणविषकमतप्रदर्शकाः त्रयः श्लोकावुपलभ्यन्ते । एकस्तु पूर्वमुक्तः द्वावधस्ताल्लिख्येते[2] । भागुरेः श्लोकानां पद्यपद्धत्वादनुमीयते यत् कदाचिदस्य व्याकरणं पद्यबद्धं स्यात् ।

काशिकावृत्तौ ( ४।१।० ) भागुरेर्मतमुपलभ्यते । यथा नप्तेति भागुरिः, परं पाणिनमते स्त्रियां नप्त्री भवति । अभिनवगुप्ताचार्येण ध्वन्यालोकलोचनटीकायां भागुरिमतमुद्धृतं वर्तते—'तथा च भागुरिरपि' ( तृतीय उद्योत, पृ० ३८५ ) अमर-कोशटीकायामपि भागुरेः कोशस्यानेकानि पद्यानि प्राप्यन्ते । यथा—

---

१. अष्टाश्रिमेनं सावर्णिश्चतुरस्त्रं तु भागुरिः ।
वार्षायाणिस्तु सामुद्रं शरावं चैव गालवः ।।
ऊर्ध्ववेणीकृतं गार्ग्यः क्रोष्टकिः परिमण्डलम् ।।

२. हन्तेः कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम् ।
चतुर्थीबाधिकामाहुश्चूर्णि-भागुरि-वाग्भटाः ।।
स्यान्मतं करोतीति कारणं वा यथोक्तकम् ।।
ष्ठिवुसिव्योर्ल्युट्परयोः दीर्घत्वं वष्टि-भागुरिः ।।

भार्यामिकस्य वर्षम्बी शृंगी स्यान्मद्गुरस्य च ।
शिली गण्डूपदस्यापि कच्छपस्य डुली स्मृता ॥

## ( ५ ) पौष्करसादिः

आचार्यपौष्करसादेर्नाम पाणिनेः सूत्रपाठे नास्ति, किन्तु महाभाष्ये[१] ( ८।४ ४८ ) मैत्रायणीप्रातिशाख्ये[२] च प्राप्यते । अतः पौष्करसादेराचार्यस्य व्याकरण प्रवक्तृत्वं विस्पष्टम् ।

पुष्करसतोऽपत्यं पुमान् पौष्करसादिरित्यत्र श्रूयमाणतद्धितप्रत्ययानुसारमस्य पितुर्नाम पुष्करसत् आसीत् । जयादित्यस्यापीदमेव मतमस्ति[३] । याज्ञेश्वरभट्टेन स्वगणरत्नावल्यां पौष्करसादिशब्दस्य निर्वचनं कृतमस्ति—पुष्करे तीर्थविशेषे सीदतीति पुष्कसत् तस्यापत्यं पौष्करसादिः । आपस्तम्बधर्मसूत्रे पौष्करसादेराचार्यस्य मतं समागतं वर्तते । सम्भवतोऽयं महाभारतयुद्धकालिक आसीत् ।

## ( ६ ) चारायणः

चारायणपदमपत्यप्रत्ययान्तमस्ति । तदनुसारमस्य पिता चरनामा स्यात् पाणिना नडादिगणेऽस्य निर्देशं कृत्वा ततः फक्प्रत्ययेन चारयणपदं निष्पादितम् । महाभाष्ये ( १ । १ । ७३ ) कम्बलचारायणीयाः, ओदनपाणिनीयाः, घृतरौढीयाः, उदाहरणानि दत्तानि । चारायणः प्राचीनो वैयाकरणः कृष्णयजुर्वेदस्य च चारायणीशाखायाः प्रवक्ता आसीत् ।

## ( ७ ) काशकृत्स्नः

पाणिनीये शब्दानुशासने वैयाकरणरूपेण काशकृत्स्नस्य नाम नास्ति, किन्तु वैयाकरणनिकाये प्राचीनवैयाकरणरूपेणाचार्यस्य काशकृत्स्नस्योल्लेखो वर्तते । काशकृत्स्नस्यानेकानि सूत्राणि प्राचीनवैयाकरणवाङ्मये उपलभ्यन्ते । महाभाष्ये कविकल्पद्रुमे, प्रदीपे, वाक्यपदीये चास्य चर्चा प्रचलिताऽस्ति । अनेन त्रि-अध्यायीव्याकरणस्य, चतुरध्यायीमीमांसाशास्त्रस्य च रचना कृताऽऽसीत् । भट्टभास्करेण रुद्राध्यायभाष्येऽस्य यजुःसम्बन्धिनो मतस्य चर्चा कृताऽस्ति । अस्य व्युत्पत्तिः एवं कृतास्ति[४] ।

---

१. चयो द्वितीयाः शरिपौष्करसादेः । ( ८।४।४८ )

२. मै० प्रा० ५।३७

३. पुष्करसच्छब्दाद् बह्वादित्वादिञ्, अनुसत्कादीनां चेत्युभयपदवृद्धिः । ( काशिका २ । ४ । ६३ )

४. कशाभिः कृन्तन्ति इत्यर्थे 'कृते कृत्स्ने ङ्याट्त्वे च ह्रस्वश्च बहुलम्' इत्यनेन ह्रस्वत्वे काशकृत्स्नः (गणरत्नमहोदधिः) अर्थात् कशापूर्वकात् 'कृती छेदन' इति धातोः क्स्नप्रत्यये आकारस्य ह्रस्वे च कृते निष्पद्यते काशकृत्स्नशब्दः ।

तत्त्वरत्नाकरे भट्टपराशरेण काशकृत्स्नः भगवतो वादरायणस्य शिष्यः प्रोक्तोऽस्ति ।

पतञ्जलिना कृते महाभाष्ये पशपशाह्निके क्रमशः पाणिनि-आपिशलि-काशकृत्स्नप्रोक्तानां "व्याकरणग्रन्थानां नामानि सन्ति—पाणिनिना प्रोक्तं पाणिनीयम्, अपिशलम्, काशकृत्स्नं च । काशकृत्स्नस्य धातुपाठः कन्नडटीकया सह प्रकाशितो वर्तते ।

## ( ८.९ ) माध्यन्दिनि–वैयाघ्रपद्यौ

माध्यन्दिनी-वैयाघ्रपद्ययोर्नाम पाणिनीयव्याकरणे नोपलभ्यते, किन्तु काशिकायामिमौ वरिष्ठवैयाकरणरूपेणाङ्कितौ स्तः ।

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।

माध्यन्दिनिर्वष्टि गुणत्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥ ७ । १ । ९४

अर्थात्—माध्यन्दिनिराचार्यः उशनस्-शब्दस्य सम्बोधने हे उशनः ! हे उशनन् ! हे उशन ! इति त्रीणि रूपाणि वाञ्छति तथा श्रेष्ठो वैयाकरणो वैयाघ्रपाद्यः क्लीबे इगन्तशब्देषु गुणमिच्छति यथा वारिशब्दस्य क्लीबे सम्बोधने हे वारे ! इति ।

कातन्त्रवृत्तिपञ्जिकाया रचयित्रा त्रिलोचनदासेन कारिकेयं व्याघ्रभूतेराचार्यस्य नाम्ना उद्धृताऽस्ति । सुपद्यमकरन्दकारेणेदं व्याघ्रभूतेः वचनं स्वीकृतम्, न्यासकारहरदत्ताभ्याञ्चैतदागमवचनं लिखितम् ।

विमलसरस्वतीकृतरूपमालाया नपुंसकलिङ्गप्रकरणे तथा प्रक्रिया-कौमुदी-भूमिकायाञ्च निम्नाङ्कितंपद्यमङ्कितमस्ति—

इकः षण्ढेऽपि सम्बुद्धौ गुणो माध्यन्दिनेर्मते ।

माध्यन्दिनिपदमपत्यप्रत्ययान्तमस्ति । तदनुसारमस्य पितुर्नाम माध्यन्दिनः। पाणिनिना हि माध्यन्दिनेः पितुर्नाम माध्यन्दिन इति, 'उत्सादिभ्योऽञ्' (४।१।८६) इति सूत्रस्योत्सादिगणे निर्दिष्टमस्ति । अतो माध्यन्दिनस्य पुत्रो माध्यन्दिनिः पाणिनितः प्राचीनोऽस्तीति निर्विवादम् ।

एवं वैयाघ्रपद्यस्य नामापि पाणिनिसूत्रेषु नोपलभ्यते । गोत्रप्रत्ययान्तत्वाद् व्याघ्रपद्यस्य पितुर्नाम व्याघ्रपात् आसीत् । महाभारतानुसारं व्याघ्रपात् महर्षेः वसिष्ठस्य पुत्र आसीत्[1] । पाणिनिना व्याघ्रपात्पदं गर्गादिगणे पठितं तस्माद्यञ्-प्रत्ययेन वैयाघ्रपद्यपदं निष्पद्यते । वैयाघ्रपद्यं नाम शतपथब्राह्मणे[2] जैमिनि-

---

१. व्याघ्रयोन्यां ततो जाता वसिष्ठस्य महात्मनः ।

एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः ॥ अनु० प. ५३ । ३०

२. ४ । १० । ६ । १,

ब्राह्मणे[1] तथा शांख्यायनारण्यके[2] च उपलभ्यते । काशिकोक्तोदाहरणेन प्रतीयते यद् वैयाघ्रपद्यप्रोक्तव्याकरणे दश अध्यायाया आसन्[3] ।

## (१०) रौढिः

आचार्यस्य रौढेः निर्देशः पाणिनीयसूत्रेषु गणपाठेषु च नास्ति, किन्तु काशिकाकारेण पाणिनेः प्राग्भूतेषु आचार्येषु आपिशलि-काशकृत्स्न-पाणिनिपरम्परायां रौढेरुल्लेखः कृतोऽस्ति[4] । अतः काशिकायां श्रुतेषु आपिशलिपाणिनि–काशकृत्स्नेषु वैयाकरणेषु स्मृतत्वाद् रौढिराचार्योऽपि वैयाकरणः सम्भवति । रौढिरपत्यप्रत्ययान्तोऽस्ति । तदनुसारं तत्पितुर्नाम रूढ इति भवितुमर्हति । पतञ्जलिना स्वकीये महाभाष्ये घृतरौढीया इत्युदाहरणं प्रदत्तम् । जयादित्येन काशिकायां ( १।१।५३ ) अस्य भाव एवं स्पष्टीकृतः—घृतप्रधानो रौढिः घृतरौढिः तस्य छात्रा घृतरौढीयाः ।

पाणिनीये महाभाष्ये लिखितमस्ति—

सिद्धन्तु रौढ्यादिषूपसंख्यानात् । सिद्धमेतत्, कथं ? रौढ्यादिषूपसंख्यानात् । रौढ्यादिषूपसंख्यानं कर्तव्यम् । के पुना रौढ्यादयः ? ये क्रौड्यादय इति ।

## (११) शौनकिः

रौढिवदेव शौनकेः सम्बन्धेऽप्यधिकं ज्ञानं नास्ति । पाणिनेरष्टाध्याय्यामस्य चर्चा नास्ति, किन्तु चरकसंहितायाः टीकाकर्त्रा उज्जटेन चिकित्सास्थानस्य ( २।२७ ) व्याख्यायामाचार्यशौनकेरेकं मतमुद्धृतमस्ति[5] । अर्थात् कृञ्धातोः कर्तरि अर्थे ल्युट् प्रत्यये सति शौनकिराचार्यः दीर्घत्वस्य शासनं करोति । भट्टिजयमङ्गलायामुद्धृतवचनस्योत्तरार्द्धे लभ्यते यत् धाञ्-कृञ्-तनु-नहधातुपरेषु सत्सु अवाप्योरुपसर्गयोरकारस्य लोपो भवति । विकल्पेनेति शौनकेः मतमस्ति[6] ? शौनकेर्व्याकरणसम्बन्धिमतं वाजसनेय-प्रातिशाख्यादावुपलभ्यते । शौनकिपदस्यापत्यप्रत्ययान्तत्वात् शौनकिपिता शौनको भवितुमर्हति । शौनकेः पाठान्तरं शौनकोऽपि प्राप्यन्ते तन्मते शुनकिशौनकयोरैक्यमस्ति । चरकस्य सूत्रस्थाने

---

१. ३।७।३।२। २. ४।९।१।१।

३. दशका व्याघ्रपदीयाः ( काशिका ४।२।६५, दशकं वैयाघ्रपदीयम् ( काशिका ५।१।५८ )

४. आपिशलपाणिनीयाः, पाणिनीयरौढीयाः, रौढीयकाशकत्स्नाः ( काशिका ६।२।७७ )

५. कारणशब्दस्तु व्युत्पादितः ।
करोतेरपि कर्तृत्वे दीर्घत्वं शास्ति शौनकिः ।

६. धाञ् कृञो स्तनिनह्योश्च बहुलत्वेन शौनकिः । ३।४७

( २५।१५ ) शौनकस्य पाठान्तरं शौनकिरुपलभ्यते । अद्‌भुतसागरे शौनकस्य मते उल्कानां पञ्चविधत्वमुपदिष्टमस्ति[१] ।

## (१२) गौतमः

गौतमस्य नाम पाणिनेरष्टाध्याय्यां नोपलभ्यते, किन्तु महाभाष्ये पतञ्जलिना आपिशलि-पाणिनि-व्याडिभिः सहैव गौतमस्यापि नाम निर्दिष्टमस्ति । अतः त्रिभिः वैणाकरणैः सहास्य नामनिर्देशाद् अयमपि वैयाकरण एव कल्प्यते । अस्य पुष्टिस्तु तैत्तरीयप्रातिशाख्य[२]-मैत्रायणीयप्रातिशाख्याभ्यां[३] भवति । गौतम-गृह्यसूत्रस्य गौतमशिक्षायाः तथा गौतमधर्मशास्त्रस्यापि अयं रचयिता स्वीक्रियतेऽतोऽयं निःशंसयं पाणनिपूर्ववर्तीति निश्चीयते ।

## (१३) व्याडिः

आचार्यव्याडेर्नाम निर्देशःपाणिनेरष्टाध्याय्यां नोपलभ्यते, किन्तु शौनकेन ऋक्प्रातिशाख्ये व्याडेरनेकानि मतानि उद्धृतानि सन्ति [४] । भाषावृत्तौ ( ६।१।७०) पुरुषोत्तमदेवेन गालवेन सार्कं व्याडेरेकं मतमुद्धृतमस्ति[५] । महाभाष्ये प्रसिद्ध-वैयाकरणमापिशलि-पाणिनि-गौतमानामन्तेवासिभिः सह व्याडेरप्यन्तेवासिनां निर्देशोऽस्ति[६] । ऋक्प्रातिशाख्ये शाकल्य-गार्ग्याभ्यां साकमेव व्याडेरपि उल्लेखो विद्यते[७] । एतेनेदं सिध्यति यद् व्याडिना किञ्चित् शब्दानुशासनं नूनं रचितम् । व्याडेर्द्वितीयं नाम दाक्षायणः । अयं दाक्षीपुत्रस्य पाणिनेरस्ति मातुलः । अनेन लक्षश्लोकात्मकः संग्रहनामको ग्रन्थः लिखितः आसीदिति प्रसिद्धिः ।

श्रूयते अनेनैकस्य दशाध्यायी व्याकरणस्यापि रचना कृतास्ति, परमस्य परिचयः संग्रहकाररूपेणाधिकं विश्रुतं विद्यते । पाणिनेः पूर्ववर्तिनां वैयाकरणानामाचार्याणां परम्परायां व्याडेः स्थानमत्युन्नतमस्ति । एतस्यासाधारणविद्वत्तायाः परिचायकः सङ्ग्रहग्रन्थः साम्प्रतं नोपलभ्यते, किन्तु वाक्यपदीयटीकाकर्तुः पुण्यराजस्य साक्षितया तथा नागेशभट्टस्योद्धरणैः प्रतीयते यद् व्याडिकृतसंग्रहग्रन्थस्य परिमाणो लक्षश्लोकात्मक आसीत् । यद्यपीन्द्रादारभ्य व्याडिपर्यन्तं त्रयोदशानां

---

१. उल्का एवं पञ्चविधा ह्येताः शौनकेन प्रदर्शिताः ।

२. प्रथमपूर्वो हकारश्चतुर्थं तत्संस्थानं प्लाक्षि-कौण्डिन्य-गौतम-पौष्कर-सादीनाम् ( ५।३८ )

३. मैत्रायणी प्रातिशाख्ये ५।४०

४. ऋक्प्रातिशाख्ये २।२३।२८।६।४३ ।

५. इकां यणिभर्व्यवधानं व्याडिगालवयोरिति वक्तव्यम् ।

६. आपिशल-पाणिनीय-व्याडीय-गौतमीयाः ( ६।२।३६ )

७. व्याडि-शाकल्यगर्ग्याः ( १३।३१ )

वैयाकरणानामुल्लेखः पाणिनेरष्टाध्याय्यां नोपलभ्यते, अथापि एते आचार्याः पाणिनेः प्रागवश्यमासन्, यतो हि एते महाभाष्य-कविकल्पद्रुम-काशिकाप्रभृतिषु व्याकरणादिग्रन्थेषु नूनं सोल्लासं चर्चिताः सन्तिः ।

## अष्टाध्याय्यां प्रोक्ता आचार्याः

पाणिनेः पूर्ववर्तिभ्योऽष्टाध्याय्यामनुक्तेभ्यः त्रयोदशवैयाकरणेभ्योऽतिरिक्ता अपरेऽपि दश आचार्याः सन्ति येषामुल्लेखः स्वयमेव पाणिनिना स्वस्या अष्टाध्याय्या सूत्रेषु कृतो विद्यते । ते सन्ति ( १ ) आपिशलि–( २ ) काश्यप–( ३ ) गार्ग्य–( ४ ) गालव–( ५ ) चाक्रवर्मण–( ६ ) भारद्वाज–( ७ ) शाकटायन–( ८ ) शाकल्य–( ९ ) सेनक–( १० ) स्फोटायनाः ।

## (१) आपिशलिः

आपिशलेः आचार्यस्योल्लेखः पाणिना स्वकीयाया अष्टाध्याय्या एकस्मिन् सूत्रे कृतोऽस्ति[१] । महाभाष्ये आपिशलेः मतं प्रमाणरूपेणोद्धृतमस्ति[२] । वामन[३]-न्यासकार-जिनेन्द्रबुद्धि-कैयट[५]-मैत्रेय[६]-रक्षित प्रभृतिभिः प्राचीनग्रन्थकारैः वैयाकरणैः आपिशलिव्याकरणस्यानेकानि सूत्राणि उद्धृतानि । पाणिनिशिक्षायामपि आपिशलेरुल्लेखो विद्यते ।

एवमष्टाध्यायी-महाभाष्य-भाष्यप्रदीप-काशिका-न्यासादिग्रन्थेषु आपिशलेः बहुचर्चितं व्यक्तित्वं दर्शंदर्शं तस्य महती महत्ता प्रतीयते । अयं याज्ञवल्क्यस्य श्वसुर आसीत् ।

काशिकायामापिशलिपदस्य व्युत्पत्तिरेवं प्रदर्शिता—अपिशलस्यापत्यमापिशलिराचार्यः अत इञ् ( ६।२।३६ ) । गणरत्नमहोदधिकारो वर्द्धमानो लिखति यत्–पिशतीत्यौणादिककलप्रत्यये पिशलः न पिशलोऽपिशलः कुलप्रधानं तस्यापत्यम् । एवं व्युत्पत्त्यनुसारं वामन-वर्द्धमानमतेन आपिशलेः पितुर्नाम अपिशलः सिद्ध्यति ।

पाल्यकीर्तेः शाकटायनव्याकरणस्य अमोघावृत्तौ ( ३।२।१६१ ) अष्टका आपिशलपाणिनीयाः इत्युदाहरणेन प्रतीयते यदापिशलिव्याकरणस्य पाणिनीयव्याकरणवदष्टावेवाध्याया आसन् । महाभाष्यात् ( ४।१।१४ ) प्रतीयते यत्

---

१. वा सुप्यापिशलेः ६।१।९२ ।

२. म० भा० ४।२।४५ ।

३. काशिका ७।३।८६ ।

४. न्यास ४।२।४५,

५. महाभाष्यप्रदीप ५।१।२१ ।

६. तन्त्रप्रदीप ७।३।८६ ।

कात्यायनपतञ्जलिसमये आपिशलेः व्याकरणस्य महान् प्रचार आसीत्। तस्मिन् काले कन्या अपि आपिशलं व्याकरणमधीयन्तेस्म[१]। आपिशलमधीते ब्राह्मणी आपिशला इत्युक्तत्वात्।

कातन्त्रवृत्तेः दुर्गरचितटीकायायामापिशले निम्नाङ्कितः श्लोक उद्धृतोऽस्ति-

आगमोऽनुपघातेन विकारश्चोपमर्दनात्।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात्॥ पृ० ४७८

अपि च—आपिशलीयं मतं तु

पादस्त्वर्थसमाप्तिर्वा ज्ञेयो वृत्तस्य वा पुनः।
मात्रिकस्य चतुर्भागं पाद इत्यभिधीयते॥ पृ० ४६१

पाणिनीयव्याकरणतः प्राचीनव्याकरणेषु केवलमापिशलव्याकरणमेव एवमासीद् यस्य सर्वाधिकानि सूत्राण्युपलभ्यन्ते। व्याकरणमिदं पाणिनिव्याकरणवदेव सर्वाङ्गपूर्णं सुव्यवस्थितं चासीत्। आपिशलिना लिखिताः धातुपाठ-गणपाठ-उणादिसूत्र-शिक्षानामकाश्चत्वारो ग्रन्थाः प्रसिद्धाः सन्ति।

## (२) काश्यपः

पाणिनेरष्टाध्याय्यां काश्यपस्य मतं बारद्वयं समागतमस्ति[२]।

वाजसनेयप्रातिशाख्ये (४।५) शाकटायनेन सह काश्यपस्याप्युल्लेखो वर्तते[३]। अतः प्रातिशाख्याष्टाध्याय्योरुल्लिखितौ काश्यपौ एकव्यक्तिरेव। काश्यप-शब्दो गोत्रप्रत्यान्तोऽस्ति। तदनुसारमस्य मूलपुरुषो मरीचिपुत्रः कश्यपः। काश्यप-व्याकरणस्य किमपि सूत्रं नोपलभ्यते, केवलमस्य मतमेव प्रदर्शितमस्ति। अनेन व्याकरण–कल्प–छन्द पुराणादिविषयेऽपि ग्रन्था लिखिता आसन्निति श्रूयते।

काश्यपप्रोक्तं शिल्पशास्त्रम् आनन्दाश्रम पूनातः प्राप्यते। सरस्वतीकण्ठाभरणे काश्यपीयस्य पुराणस्यापि नाम श्रूयते। विष्णुपुराणस्य श्रीधरी टीकायां पुराणप्रवक्तुः काश्यपस्य नामास्ति।

## ( ३ ) गार्ग्यः

पाणिनेरष्टाध्याय्यां गार्ग्यस्य त्रिषु सूत्रेषु नाम निर्दिष्टमस्ति[४]। गार्ग्यस्यानेक-मतस्योल्लेखः ऋक्प्रातिशाख्ये वाजसनेयप्रातिशाख्ये च उपलभ्यते। गार्ग्यपदं

---

१. आपिशलमधीते ब्राह्मणी आपिशला।

२. तृषि-मृषि-कृषेः काश्यपस्य (१।२।२५)
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (८।४।६७)।

३. लोपं काश्यप-शाकटायनौ।

४. अड्गार्ग्यगालवयोः (७।३।९९), ओतो गार्ग्यस्य (८।३।२०)
नोदात्त-स्वरितोदयमगार्ग्यकाश्यप गालवानाम् (८।४।६७)

गोत्रप्रत्ययान्तं वर्तते। तदनुसारमस्य मूलपुरुषो गर्गः। गर्गो हि पूर्वनिर्दिष्टस्य वैयाकरणभरद्वाजस्य पुत्र आसीत्। यास्कस्य निरुक्तेऽपि गार्ग्यस्योल्लेखो वर्तते। चरकसूत्रस्थाने ( १ । १० ) गार्ग्यस्य चर्चा विद्यते। गार्ग्यस्य किमपि सूत्रं प्राचीनग्रन्थेषु नोपलभ्यते। अष्टाध्याय्यां प्रातिशाख्ये च गार्ग्यस्य यन्मतमुद्धृतमस्ति तेन प्रतीयते यदस्य व्याकरणमपि सर्वाङ्गपूर्णमासीत्। उबट-भाष्ये गार्ग्यकृतपदपाठ-विषयक एकः प्राचीनो नियम उद्धृतोऽस्ति—

पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः।
अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति ॥

## ( ४ ) गालवः

पाणिनेरष्टाध्याय्यां गालवस्य मतं वारचतुष्टयं निर्दिष्टमस्ति[1]। पुरुषोत्तमदेवेन भाषावृत्तौ ( ६ । १७७ ) गालवव्याकरणस्यैकं मतमुद्धृतमस्ति[2]। यदि गालवशब्दः अन्यवैयाकरणनामवत् तद्धितप्रत्ययान्तो भवेत्तर्हि गालवस्य पितुर्नाम गलवः गलुर्वा सम्भवति। महाभारतस्य शान्तिपर्वणि पाञ्चालबाभ्रव्यगालवः क्रमपाठ-शिक्षयोः प्रवक्ता प्रोक्तो वर्तते। शिक्षायाः सम्बन्धो व्याकरणेन साकं विद्यते। प्रसिद्धैः वैयाकरणैः आपिशलि—पाणिनिचन्द्रगोमिभिरपि शिक्षाग्रन्थानां निर्माणं कृतवन्त आसन्। तदनुसारं यदि शिक्षायाः प्रणेता पाञ्चाल-बाभ्रव्यो गालव एव व्याकरणप्रवक्ता तर्हि गालवस्य बाभ्रव्यगोत्रं सम्भवेत्, पाञ्चालः तस्य देशः सम्भवति। सुश्रुतटीकाकर्त्रा डल्हणेन गालवो धन्वन्तरिशिष्यः प्रोक्तोऽस्ति[3]।

निरुक्ते[4], बृहद्देवतायां[5], ऐतरेयब्राह्मणे[6] वायुपुराणे[7] चरकस्यारम्भे[8] च

---

१. इको ह्रस्वोऽङ्यो गालवस्य (६ । ३ । ६१), अड् गार्ग्यगालवयोः (७ । ३ । ९९) तृतीयादिषु भाषितपुंस्कपुंवद् गालवस्य ( ७ । १ ७४ ), नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ( ८ । ४ । ६७ )

२. यण्भिर्व्यवधानं व्याडिगालवयोरिति वक्तव्यम् ( दधिअत्र दध्यत्र मधुअत्र मध्वत्र )

३. प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्यगालवाः ( १ । ३ )

४. शितिमांसतो मेदस्य इति गालवः ( ४ । ३ )

५. १ । २४, ५ । ३९, ६ । ४३, ७ । ३८

६. नेदमेकस्मिन्नहनि समापयेदिति जातुकर्ण्यः, समापयेदिति गालवः (५।३।३)

७. शरावं चैव गालवः ( ३४ । ६३ )

८. च० सू० स्था० ( १ । १० )

गालवस्य मतोल्लेखो विद्यते। बृहद्देवतायां गालवपुराणकविः प्रोक्तोऽस्ति[1] एतेन प्रतीयते यद् गालवस्य किञ्चिदेकं भूवर्णनमपि आसीत्। अनेन व्याकरणातिरिक्ता संहिता-ब्राह्मण-क्रमपाठ-शिक्षा-कामसूत्रविषयका ग्रन्था लिखिताः—

## ( ५ ) चाक्रवर्मणः

चाक्रवर्मणस्य नाम पाणिनीयाष्टाध्याय्यां[2] तथा उणादि[3]सूत्रेषूपलभ्यते। भट्टोजीदीक्षितेन शब्दकौस्तुभेऽस्यैकं मतमुद्धृतमस्ति[4]। श्रीपतिदत्तेन कातन्त्र-परिशिष्टे हेतौ वा इति सूत्रवृत्तौ चाक्रवर्मणस्य उल्लेखः कृतोऽस्ति। एतेनास्य व्याकरणप्रवक्तृत्वं विस्पष्टम्। चाक्रवर्मणव्याकरणस्य एकमपि सूत्रं नोपलभ्यते। अयं च क्रवर्मणः पुत्रः काश्यपस्य च पौत्रः स्मर्यते। वायुपुराणानुसारमयं दनु—कश्यपाभ्यामुत्पन्नः।

## ( ६ ) भारद्वाजः

भारद्वाजस्योल्लेखः केवलमेकस्मिन् पाणिनीयसूत्रे समागतमस्ति[5]। भारद्वाजस्य व्याकरणविषयकं मतं तैत्तिरीयप्रातिशाख्ये[6] ( १७। ३ ) तथा मैत्रायणीय-प्रतिशाख्ये[7] ( २। ५ ६ ) मिलति। अस्य पूर्वपुरुषः इन्द्रस्य दीर्घजीवी शिष्य भरद्वाज आसीत्। व्याकरणातिरिक्ता अनेन आयुर्वेदे, अर्थशास्त्रे च ग्रन्था लिखिताः। अस्य व्याकरणं साम्प्रतं विलुप्तं वर्तते। चाणक्येनार्थशास्त्रे भारद्वाजस्यानेकानि मतानि उद्धृतानि सन्ति।

## ( ७ ) शाकटायनः

आचार्यस्य शाकटायनस्य पाणिनेरष्टाध्याय्यां वारत्रयं नाम समागते विद्यते[8]। वाजसनेयप्रातिशाख्ये[9] तथा ऋक्प्रातिशाख्ये[10]ऽपि अस्यानेकवारं निर्देशो विद्यते।

---

१. नवभ्य इति नैरुक्ताः पुराणाः कवयश्च ये।
मधुकः श्वेतकेतुश्च गालवश्चैव मन्यते॥ १। २४

२. ई चाक्रवर्मणस्य ( ६। १। १३० )

३. कयश्चाक्रवर्मणस्य ( प. प. ३।१४४ )

४. यत्तु कश्चिदाह चाक्रवर्मणव्याकरणे ( १। १। २७ )

५. ऋतो भारद्वाजस्य ( ७। २। ६३ )

६. अनुस्वारेऽण्विति भारद्वाजः।

७. चतुर्वेदाध्यायीभारद्वाज इति।

८. लङः शाकटायनस्यैव ( ३। ४। १११ ), व्योर्लघु प्रयत्नतरः शाकटायनस्य ( ८। ३। १८ ), त्रिप्रभृतिषु शाकटायनस्य ( ८। ४। ५० )

९. व्य० प्रा० ( ३। ९, १२, ८७ )

१०. ( १। १६, १३। ३९ )

यास्केन स्वनिरुक्ते[1] वैयाकरणशाकटायनस्य मतमृद्धृतमस्ति । पतञ्जलिना च महाभाष्ये स्पष्टैः शब्दैः शाकटायनो व्याकरणशास्त्रस्य प्रवक्ता उक्तोऽस्ति[2] । बृहद्देवतायामपि शाकटायनमतमुद्धृतमस्ति ।

शाकटायनो हि काण्ववंशीयोऽभिमतः । अनेन व्याकरणेऽपूर्वा शाकटायन-व्याकरणस्य रचना कृता । महाभाष्ये शाकटायनस्य पितुर्नाम शकट उक्तोऽस्ति, परं वैयाकरणमतानुसारं शकटस्तस्य पितामहस्य नाम समुचितम् । पाणिनिना शकटशब्दः नडादि गणे पठितः । गोत्राधिकारे विहिताः प्रत्यया अनन्तरापत्येऽपि भवन्ति पौत्रप्रभृतिषु अपत्येष्वपि प्रयोगो भवति । वर्धमानेन शकटस्य अर्थः शकटमिव भारक्षमः कृतोऽस्ति[3] । मत्स्यपुराणानुसारमेकं शाकटायनगोत्रमाङ्गि-रसमपि । अनन्तदेवेन शाकटायनकण्वस्य शिष्यः प्रोक्तः, किन्तु शैशिरशिक्षा-नुसारमयं शैशिरेः शिष्यः प्रोक्तोऽस्ति--शैशिरस्य तु शिष्यस्य शाकटायन एव च । काशिकायां सर्वे वैयाकरणाः शाकटायनतो हीनाः प्रोक्ताः सन्ति—अनुशाकटायनं वैयाकरणाः ( १ । ४ । ८६ ) उपशाकटायनं वैयाकरणाः ( १ । ४ ८८ ) महा-भाष्यात् ( ३ । ३ । १ ) विदितं भवति यत् वैयाकरणेषु शाकटायन एव सर्वान् शब्दान् धातुजान् मन्यते[4] ।

साम्प्रतं शाकटायन व्याकरणमनुपलब्धमस्ति । तत्र निरुक्तमहाभाष्या-नुसारं शाकटायने वैदिकलौकिकोभयविधशब्दानामन्वाख्यानमासीत् । चतुरध्या-यीतः प्रतीयते यत् पदपाठस्थावग्रहादिनिर्देशकं किमपि प्रातिशाख्यसदृशं छन्दः-सम्बन्धि लिखितमासीत्[5] । निरुक्तव्याख्याता दुर्गाचार्यो वक्ति यत् शाकटायनेन कियतां पदानां सिद्धिरनेकैः धातुभिः कृताः तथा कियतां पदानामेकेन धातुना[6] । शाकटायनेन सत्यशब्दस्य व्युत्पत्तिः 'इण् गतौ तथा अस् भुवि' आभ्यां द्वाभ्यां धातुभ्यां कृता विद्यते । बृहद्देवतायां लिखितमस्ति यत् शाकटायनः—अच्छ-श्रत्—

---

१. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ( १ । १२ )

२. व्याकरणे शकटस्य च तोकम् ( ३ । ३ । १ ),
वैयाकरणानां शाकटायनः ( ३ । २ । ११५ )

३. गणरत्नमहोदधिः पृष्ठे १४९

४. तत्र नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च ।

५. समासावग्रहविग्रहान् पदे यथोवाच छन्दसि ।
शाकटायनः तथा प्रवक्ष्यामि चतुष्टयं पदम् ॥ ( च. ४ पादे )

६. शाकटायनाचार्यो हि अनेकैः धातुभिरेकमभिधानमनुविहितवान्, एकेन चैकम् । ( निरुक्तटीका १ । १३ )

अन्तरशब्दोपसर्गत्वेनाङ्गीकरोति[१]। श्रूयते यदनेन पञ्चपादी उणादिसूत्रश्राद्ध-कल्पादीनामपि रचना कृतासीत्।

उपसर्गाः प्रायः सर्वैः आचार्यैरभिप्रेयन्ते, परन्तु शाकटायन आचार्यः 'अच्छ-श्रत्-अन्तर' इत्येतेषां त्रयाणामिपि शब्दानामुपसर्गत्वं स्वीकरोति—

अच्छश्रदन्तररित्येतान् आचार्यः शाकटायनः।
उपसर्गान् क्रियायोगान् मेने ते तु त्रयोऽधिकाः॥

## (८) शाकल्यः

पाणिनिना हि आचार्य शाकल्यस्योल्लेखः पाणिनीयसूत्रेषु चतुर्षु स्थानेषु कृतोऽस्ति[२]। शौनकेन[३] कात्यायनेनापि[४] महाभाष्यकारेण पतञ्जलिना शाकल्यीयनियमस्योल्लेखः कृतोऽस्ति[५]। शाकल्यस्य नाम शाकलनामान्तरेणापि क्वचिदुल्लेखः[६]।

शाकल्यपदं तद्धितप्रत्ययान्तं विद्यते। तदनुसारं शाकल्यस्य पितुर्नाम शकलः पाणिनिना हि शकलपदं गर्गादिगणे पठितमस्ति। पाणिनिप्रातिशाख्यानुशीलनेन प्रतीयते यत् शाकल्यव्याकरणे वैदिकलौकिकोभयविधशब्दानामन्वाख्यानमासीत्। कियतां कथनमस्ति यत् शाकल्येन किमपि व्याकरणशास्त्रं न रचितम्। पाणिन्यादिभिः शाकल्यकृतात् ऋक्पदपाठात् ते नियमाः संगृहीताः।

## (९) सेनकः

आचार्यसेनकस्योल्लेखः पाणिनिना अष्टाध्याय्यां केवलमेकवारमेव कृतो विद्यते[७]। पाणिनेरष्टाध्यय्यातिरिक्ते कस्मिश्चिद् ग्रन्थे सेनकस्य नाम नोपदिष्टमस्ति नाम तत्कृतं किमपि कुत्राप्युपलभ्यते। अतोऽस्य विषये किमपि वक्तुं दुःशकमेवास्ति।

---

१. अच्छश्रदन्तरित्येतान् आचार्यशाकटायनः।
उपससर्गान् क्रियायोगान् मेने तु ते त्रयोऽधिकाः॥ (२।९५)।

२. सम्बुद्धौ शाकल्यस्येतावनार्षे (१।१।१६), इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (६।१।१२७), लोपः शाकल्यस्य (८।३।१९), सर्वत्र शाकल्यस्य (८।४।५१)

३. ऋक्प्रातिशाख्ये (३।१३, २२, ४।१३)

४. वा० प्रातिशाख्ये (३।१०)

५. सिन्नित्यसमासयोः शाकल्यप्रतिषेधो वक्तव्यः (६।१।१२७)

६. पुनरुक्तानि लुप्यन्तेपदानीत्याह शाकलः (का० प्रा० ४।१७७)

७. गिरेश्च सेनकस्य (५ ४।११)

## ( १० ) स्फोटायनः

आचार्यस्फोटायनस्य नाम पाणिनेरष्टाध्याय्या एकस्मिन् सूत्रे उपलभ्यते[२]।

पदमञ्जरीकारो हरदत्तः काशिकाव्याख्यायां ( ३ । १ । १२३ ) स्फोटायनशब्दस्य व्युत्पत्त्यादि एवं कृतमस्ति—

स्फोटोऽयनं परायणं यस्य स स्फोटायनः=स्फोटप्रतिपादनपरो वैयाकरणः। ये त्वौकारं पठन्ति ते नडादिषु अश्वादिषु वा ( स्फोटशब्दस्य ) पाठं मन्यन्ते[३]। एतदनुसारमयमाचार्यः वैयाकरणानां महत्त्वपूर्णस्फोटतत्त्वस्योपज्ञाताऽऽसीत्। अत एवायं वैयाकरणनिकाये स्फोटायननाम्ना प्रसिद्धः। अस्य वास्तविकं नाम अज्ञातं वर्तते, स्फोटायननाम तु कर्तृत्वं प्रतीयते, स्फोटः सम्भवतोऽस्य स्फोटायन इति कस्यचित् पूर्वजस्य नाम आसीत्। हेमचन्द्रस्याभिधानमणिकोशे स्फोटायनस्य द्वितीयं नाम कक्षिवान् इति लिखितमस्ति—

**'स्फोटायने तु काक्षिवान्'**। एवमेव केशवोऽपि नानार्थार्णवसंक्षेपे—**स्फोटायनस्तु कक्षिवान्** इति लिखति। एतेन स्पष्टीभवति यत् स्फोटायनः कक्षिवतः नामासीत्। भरद्वाजकृत यन्त्रसर्वस्वस्य वैमानिकप्रकरणे स्फोटायनोऽपि विमानशास्त्रविशेषज्ञरूपेण प्रोक्तोऽस्ति—**चित्रिण्येवेति स्फोटायनः।**

अस्य व्याख्यायां लिखितमस्ति—

तदुक्तं शक्तिसर्वस्वे वैमानिकगतिवैचित्र्यादिद्वात्रिंशतिक्रियायोगे एकैव चित्रिणी शक्त्यलमिति शास्त्रे निर्णीतं भवति इत्यनुभवतः शास्त्राच्च मन्यते स्फोटायनाचार्यः[१]।

एतया व्याख्यया स्पष्टं प्रतीयते यत् आचार्यस्फोटायनः एको महान् वैज्ञानिक आचार्योऽप्यासीत्।

भरतमिश्रेण स्फोटतत्वप्रतिपादकस्य नाम औदुम्बरायण इति लिखतोऽपि[२] यास्केन स्वनिरुक्ते ( १ । २ ) औदुम्बरायणस्य मतमुद्धृतमस्ति[३]। टीकाकाराणां मतानुसारमौदुम्बरायणमते शब्दानित्यत्वं प्रदर्शितमस्ति, परन्तु वाक्यपदीयतो ज्ञायते यदौम्बरायणाचार्यः शब्दनित्यवादी अस्ति। स हि अखण्डवाक्य-

---

२. अवङ् स्फोटायनस्य ( ६ । १ । १२३ )

३. पदमञ्जरी ( भाग २, पृष्ठ ४८४ )

१. बृहद्विमानशास्त्र-श्रीस्वामीब्रह्ममुनिसम्पादित

( पृ० ७४. अ. को. पृ. ८३ श्लो० १३६ )

२. भगवदौदुम्बरायणाद्युपदिष्टाखण्डभावमपि—अपलपितम्।

( स्फोटसिद्धिः पृ० १ )

३. इन्द्रियनित्यत्यत्वौदुम्बरायणः।

स्फोटस्य प्रतिपादयितास्ति। अतो भर्तृहरिमतानुसारं निरुक्तटीकाकाराणां मतमसमञ्जसम्। एतद्विषकं भर्तृहरेः वचनमित्थमस्ति—

वाक्यस्य बुद्धौ नित्यत्वमर्थयोगं च शाश्वतम्।
दृष्ट्वा चतुष्ट्वं नास्तीति वार्ताक्षौदुम्बरायणौ॥

(वाक्यपदीये २।३४३)

स्फोटवादो हि वैयाकरणानां प्रधानवादोऽस्ति। तेषां शब्दनित्यत्ववादस्यायमेवास्ति महानाधारः। महाभाष्यकारस्य पतञ्जलेः लेखानुसारं स्फोटो द्रव्यम्, ध्वनिश्च तद्गुणोऽस्ति[१]। तस्मात् स्फोटायनः शाब्दिकेषु प्रसिद्धस्फोटतत्त्वस्यादिः उपज्ञाता आचार्य आसीत्।

भर्तृहरिमते च ध्वनिस्तावद्द्विविधः प्राकृतो वैकृतश्च। तत्र प्रथमः प्रकृत्या=स्वभावेन जातत्वात् स्फोटव्यञ्जको द्वितीयस्तु न तथा—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वानिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेः वृत्तिभेदे तु वैकृताः॥

इत्थमापिशलेरारभ्य स्फोटायनपर्यन्तं वर्णिताः पाणिनेरष्टाध्याय्यामुक्ता दशसंख्याका आचार्या तथा अष्टाध्याय्यामनुक्ताः त्रयोदश संख्याका वैयाकरणा आचार्याश्च सङ्कलनया त्रयोविंशतिराचार्याः पाणिनिपूर्ववर्तिनः आसन्। व्याकरणशास्त्रस्य प्राचीनतमपरम्परायाश्च प्रवर्तका अभवन्। एतेषु प्रायः समेषां रचना विलुप्तप्रायाः सन्ति, किन्तु तैः व्याकरणशास्त्रे पर्याप्तमालोचनं विवेचनं समीक्षणं च कृतमासीद्, यस्य गभीरमनुशीलनं विधाय दाक्षीपुत्रो महर्षिः पाणिनिः अष्टाध्यायीसदृशीं महत्तमां कृतिं कर्तुं प्राभवत्।

## पाणिनिस्तद्व्याकरणं च

महर्षिः पाणिनिः व्याकरणशास्त्रस्यैकः सुपरिचितः सर्वाधिकख्याति प्राप्तो महान् विवेचको विद्वानासीत्। एतदुत्तरवर्तिनो यावन्तो व्याकरणसम्प्रदाया अभूवन्, तैः सर्वैः पाणिनेर्नाम महता गौरवेण गृहीतमस्ति। बहुषु ग्रन्थेषु तद्व्यक्तित्वं चर्चितमस्ति। पणोऽस्यास्तीति पणिः (पणनं वा पणिः) तस्यापात्यं पुमान् पाणिनः पाणेः पणिनस्य वा गोत्रापत्यं पाणिनिः इति व्युत्पत्त्यनुसारं पाणिनेः पितुर्नाम पाणिनः, माता चास्य दक्षकुलोत्पन्ना दक्षस्य कन्या दाक्षी, संग्रहकारो दाक्षायणो व्याडिरस्य मातुलः, छन्दःशास्त्रप्रणेता पिङ्गलश्च कनीयान् भ्राता। पाणिनेर्गुरोर्नामासीद् आचार्य उपवर्षः, माहेश्वरोऽप्येकोऽस्य गुरुः श्रूयते। पाणिनेरनेकेऽन्ते वसन्त उक्ताः सन्ति, तेषु कौत्सस्य नाम लिखितरूपेणोपलभ्यते तथा हि पातञ्जलेर्महाभाष्ये (३।२।१०८) उपसेदिवान् कौत्सः

---

१. एवं तर्हि स्फोटः शब्दः ध्वनिः तद्गुणः (१।१।७०)

पाणिनिम् । अस्यैव सूत्रस्योपरि काशिकावृत्तौ उदाहरणद्वयं दत्तमस्ति ।

अनुषिवान् कौत्सः पाणिनिम्, उपशुश्रूषिवान् कौत्सः पाणिनिम् । तेनापि स्पष्टं भवति यत् कौत्सः पाणिनेः नूनं शिष्य आसीत् ।

शालातुरीयत्वादयं पाणिनिः आचार्यः शालातुरीयः प्रोच्यते ।

जैनलेखको वर्धमानो गुणरत्नमहोदधौ शलातुरीयशब्दस्य व्युत्पत्तिः एवं कृताऽस्ति शालातुरो नाम ग्रामः सोऽभिजनोऽस्यास्तीति शालातुरीयः, तत्रभवान् पाणिनिः । अर्थात् शालातुरः पाणिनेरभिजन आसीत् ।

पाणिनिना हि 'तुदीशालातुरवर्मती कूचवाराड् ढक् छण् ढञ् यकः' (४।३।९४) इति सूत्रे साक्षात् शालातुरपदं पठित्वाऽभिजनेऽर्थे शालातुरीयपदस्य सिद्धिः प्रदर्शिता ।

महाभाष्ये ( ४ । ३ । ९० ) अभिजन निवासयो र्भेदः प्रदर्शितो वर्तते—
**अभिजनो नाम यत्र पूर्वैरुषितम्, निवासो नाम यत्र स्वयं सम्प्रति उष्यते ।** एतल्लक्षणानुसारं शालातुरः पाणिनेः पूर्वजानां वासस्थानं, पाणिनिः स्वयं क्वचन अन्यत्र निवसतिस्म ।

पुरातत्त्वविदां मतानुसारं पश्चिमोत्तरसीमाप्रान्तस्थस्याटकस्य समीपवर्ती वर्तमानो लाहुरग्रामः प्राचीनशालातुरोऽस्ति । यः पाणिनेः पूर्वजानां वासस्थानमस्ति ।

उदक् च विपाशः ( ४ । २ ७६ ) वाहीकग्रामेभ्यश्च ( ४ । २ ११७ ) इत्यादिसूत्रभाष्येभ्यश्च प्रतीयते यत् पाणिनेः वाहीकदेशेन विशेषः परिचय आसीत् । अतः पाणिनिः वाहीक देशस्य तत्समीपस्य च निवासी सम्भवति ।

पुरुषोत्तमदेवेन त्रिकाण्डकोशे[1] पाणिनेर्निम्नाङ्कितानि नामामि प्रोक्तानि—पाणिनः, पाणिनिः, दाक्षीपुत्रः, शालङ्की, शालातुरीयः, आहिकः । वैजयन्ती-कोशे[2] च शालातुरीयः, दाक्षिपुत्रः, पाणिनिः, आहिकः इति चत्वारि नामानि निर्दिष्टानि श्लोकात्मकपाणिनीयशिक्षाया[3] याजुषपाठे पाणिनेय इत्यपि नाम श्रूयते । यशस्तिलकचम्प्वां[4] पणिपुत्रशब्दस्यापि व्यवहार उपलभ्यते । महा-भाष्ये[5] च भगवान् पतञ्जलिः ।[6] शिक्षायामपि ।

---

१. पाणिनिस्त्वहिको दाक्षीपुत्रः शालङ्किपाणिनौ ।
शालोत्तरीय........

२. शालातुरीयको दाक्षीपुत्रः पाणिनिराहिकः । ( पृष्ठ ९५ )

३. दाक्षीपुत्रः पाणिनेयो येनेदं व्याहृतं भुवि । ( पृष्ठ ३३ )

४. पणिपुत्र इव पदप्रयोगेषु । ( आश्वास २, पृष्ठ २३६ )

५. सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः ( १ । १ । २० )

६. शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते ( ५५ )

स्कन्दपुराणे लिखितमस्ति यत् पाणिनिना हि गोमन्तपर्वते तपस्तप्तं तत्प्रभावादेव वैयाकरणेषु प्रमुखता च प्राप्ता[१]।

पाणिनेः कुलमत्यन्तं समृद्धमासीत्। तेन व्याकरणाध्येतृभ्यश्छात्रेभ्यो भोजनस्य व्यवस्था कृतासीत्। तत्र विद्यया सह भोजनमपि लभ्यतेस्म। इदमस्य तात्पर्यमुद्घोषयितुं पतञ्जलिना महाभाष्ये ( १।१।७३ ) 'ओदनपाणिनीयाः' इत्युदाहरणं प्रदत्तम्, किन्तु वामनेन काशिकायां ( ६।२।६९ ) उदाहरणमिदं निन्दार्थे प्रदत्तमस्ति। तदर्थश्च कृतो यत् ओदनप्रधानाः पाणिनीया ओदनपाणिनीया इति। अर्थात् ये श्रद्धामन्तरा केवलमोदनप्राप्त्यै पाणिनीयं शास्त्रमधीयन्ते ते निन्दावचनं प्राप्नुवन्ति। आचार्यस्य पाणिनेः अन्यद् जीवनस्येति वृत्तं किमपि नोपलभ्यते, किन्तु पञ्चतन्त्रे प्रसङ्गतः कस्माच्चित् प्राचीनग्रन्थात् पद्यमेकमुद्धृतमस्ति, येन पाणिनेः, जैमिनेः, पिङ्गलस्य च मृत्युकारणानामुल्लेखो वर्तते। तद्यथा—

सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः
मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।
छन्दोज्ञाननिधिं जघानमकरो वेलातटे पिङ्गलं
अज्ञानावृतचेतसां मतिरुषां कोऽर्थस्तिरश्चां गुणैः॥

पाणिनेरष्टाध्यायी एका एवं सर्वाङ्गपूर्णा कृतिरस्ति, यस्यां लौकिकवैदिकोभयविद्यशब्दसिद्धये नियमनिर्देशादयोऽपूर्वाः सर्वमान्याश्च अभूवन्। मेक्डोनलस्य कथनमस्ति यत् पाणिनीयं व्याकरणं स्वनीतिनियमकारणेन इयती व्यापक ख्यातिमर्जयद् यदाधारेण वक्तुं शक्यते यद् भारतीयव्याकरणे विश्वस्मिन् सर्वप्रथमं वैज्ञानिकं विवेचनं जातं प्रकृतिप्रत्यययोरन्तरपरिचयो जातः, शब्दसिद्धिप्रकारनिर्धारणं निश्चितम्, सार्वजनीन-सर्वाङ्गीणविशुद्धायाः पद्धतेः निर्माणमजायत, यस्य तुलना विश्वस्य केनापि व्याकरणेन न कर्तुं शक्यते।

भारतस्य भाषागतपरम्परायां साहित्यक्षेत्रे पाणिनिव्याकरणेन एकमभिनवयुगस्यानुवर्तनं कृतम्। यत्र वैदिकयुगापेक्षया व्याकरणशास्त्रस्याभिवृद्ध्यर्थं नवं नवं कार्यमजायत।

भारतस्य प्रसिद्धेन भाषाविदा बाबूसुनीतिकुमारचटर्जीमहोदयेनापि स्पष्टमुक्तमस्ति यद् यदा ऋग्वेदस्य भाषा किञ्चित् प्राचीना सर्वसाधारणस्य कृते आंशिकरूपेण दुर्बोधा चानुभूता तदा भारतीयार्यभाषाया एकमर्वाचीनतरं रूपं

---

१. गोपर्वतमिति स्थानं शम्भोः प्रख्यापितं पुरा।
यत्र पाणिनानि लेभे वैयाकरणिकाग्रता॥
( अरुणाचलमाहात्म्यस्योत्तरार्धे २।६८ )

विशिष्टसाहित्यिकभाषारूपेण प्रतिष्ठापयितुं पश्चिमोत्तरपञ्जावनिवासिना पाणिनिना नवीनसाहित्यिकभाषाव्याकरणं विरच्य लौकिकभाषाया रूपं प्रदत्तम्।

पाणिनेः व्याकरणं हि संस्कृतभाषाशिक्षाया अपूर्वं साधनमस्ति । अस्य समक्षे नेदानीमपि विश्वस्य कापि जातिरग्रे गता । एवं भगवतः पाणिनेः तद् व्याकरणस्य च संस्कृतजगति सर्वोत्कृष्टतमं स्थानं वरीवर्ति ।

## यास्कः

यास्कः पाणिनेः निकटतमः पूर्ववर्ती आसीत् । अस्य व्याकरणेन सह साक्षात् सम्बन्धो नासीत्, प्रत्युत अस्य कार्यं निरुक्तेन सह संबद्धं वर्तते। निरुक्तं निघण्टुः वैदिकशब्दानां सङ्कलनस्य व्युत्पत्तिगतमर्थं प्रकाशयति, यास्को हि शब्दान्तर्गतानां धातूनां रूपस्य गवेषणं स्वकीयं कर्तव्यं मनुते तथा तदाधारेण शब्दानामर्थं निर्दिशति । यास्कस्य निर्माणे प्रातिशख्यानां योगदानमेतावदेव महत्तरं विद्यते यावत् पाणिनेः निर्माणे यास्कस्य ।

यास्क-पाणिनिभ्यां प्रयुक्तानां पारिभाषिकशब्दानामुपरि ध्याने दीयमाने पाणिनौ यास्कस्य स्पष्टः प्रभावो लक्ष्यते । निघन्टोश्च सर्वे शब्दाः अपवादमन्तरा वेदाद् गृहीताः सन्ति । अस्यादौ अध्यायत्रये पर्यायवाचिनः शब्दाः सन्ति। चतुर्थाध्याये वेदेषु समागतानां कठिनशब्दानामस्ति संग्रहः । पञ्चमे च देवतानां नाम्नः तत्प्रकृतिप्रभृतीनां वर्णनं विद्यते ।

यास्कः संज्ञाशब्दानामुत्पत्तिं धातुजां मन्यते । यास्कानन्तरं पाणिनेः पूर्वमनेके वैयाकरणा अभूवन्, परं तेषां नाद्यत्वे व्याकरणानि समुपलभ्यन्ते। अनादिकालतः प्रवहमाना व्याकरणस्य धारा निरन्तरमुत्तरोत्तरं वर्द्धते एव । यास्को हिं निश्चितरूपेण पाणिनेः पूर्वमासीत्। महाभारतस्य शान्तिपर्वणि यास्कस्यतन्निरुक्तस्य चोल्लेखो विद्यते, परं न पाणिनेः । अतो यास्कात् पाणिनेः पूर्वत्वे नास्ति कश्चन सन्देहः ।

पाणिनेः अष्टाध्याय्या अस्तित्वं तावत्पर्यन्तं स्थास्यति यावत्कालं विश्वस्मिन् संस्कृतस्याध्ययनाध्यापनप्रवाहः प्रचलिष्यति। पाणिनेरष्टाध्याय्यां चतुःसहस्राणि सूत्राणि सन्ति, तथा चेयमष्टसु अध्यायेषु विभक्ताऽस्ति, यत्र प्रत्येकं चत्वारः पादाः सन्ति। पाणिनिना अत्यन्तसरलया, मनोरमया च शैल्या सूत्राणां रचना कृतास्ति, यां वयमनायासेनावगच्छामः ।

---

१. यास्को माभृषिर्व्यग्रोऽनेकयज्ञेषु गीतवान्।
शिपिविष्ट इति ह्यस्माद् गुह्यानामधरो ह्ययम् ॥
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
( म. भा. शा. प. ३४२ । ७०,७१ )

अथापि अस्या निर्माणं दुरूहमस्ति । पाणिनिः प्रथमो वैयाकरणोऽस्ति, येन लौकिकसंस्कृतभाषाया अपूर्वं विश्लेषणं कृतं विद्यते । अनेन पूर्वापेक्षया शुद्धप्राञ्जलसूत्राणामुद्भावना कृता । पाणिनेः महदुपलब्धौ सूत्राणां लघूकरणमस्ति । सूत्रणां लघूकरणे पाणिनेः प्रत्याहारसूत्रैः महत् साहाय्यमवाप्तम् । अनुबन्धानां कृपयाऽपि अक्-अच्-हल प्रभृतिप्रत्याहारनिर्माणे महत् कौशलं प्रदर्शितम् । गणानां सहायतया पाणिनेः व्याकरणस्य संक्षेपीकरणे सफलता जाता । पारिभाषिकशब्दैरपि पाणिनेर्महत्साहाय्यं प्राप्तं यथा टी-घु-भ-ञ-लुगादयः । पाणिनिसूत्रेषु अनुवृत्ते नियमोऽस्ति । अतः कियन्ति अधिकारसूत्राणि कृतानि । तदनुसारं क्वचित् सम्पूर्णसूत्रस्य कुत्रचिच्च कस्यचनभागस्यावृत्तिर्भवति । पारिभाषिकसूत्राणामपि निर्माणकारणात् पाणिनेः व्याकरणे संक्षेपीकरणे सहायताधिगता । उणादिसूत्राणां निर्माणद्वाराऽपि महत्सौविध्यमभवत् । अष्टाध्याय्या माध्यमेन तात्कालिकभारतीयसमाजस्य संस्कृतेश्च स्पष्टं रूपमुपस्थितं भवति । पाणिनेरष्टाध्याय्यां न केवलं व्याकरणस्यैव सूत्राणि सन्ति, प्रत्युत सूत्रेषु ग्रथिताः तात्कालिकभारतीयसभ्यतासंस्कृतिप्रभृतयोऽपि दृष्टिगोचरी भवन्ति ।

## कात्यायनस्तद्वार्तिकं च

व्याकरणस्य त्रिषु मुनिषु कात्यायनस्यापि नामास्ति । अनेन पाणिनिवत् कस्यचित् मौलिकस्य ग्रन्थस्य रचना तु न कृता, परमस्य महत्ता वार्तिकेषु अवलम्बितमास्ते पाणिनेः ग्रन्थे अद्य यावत् यावत्यः समालोचना लिखिताः सन्ति तासु कात्यायनस्य-वार्तिकानि प्रधानानि सन्ति । कात्यायनात् पूर्वं न केनापि विदुषा पाणिनेः सूत्रेषु हस्तक्षेपः कृतः । पाणिनेः समालोचनायां कात्यायनेनापूर्वाया दक्षताया विज्ञतायाश्च प्रदर्शनं कृतमस्ति ।

कात्यायनः पाणिनेः शतवर्षानन्तरमजायत । मैक्समूलरप्रभृतयोऽनेके विद्वांसः वररुचि-कात्यायनौ एकव्यक्तिमेव मन्यन्ते, परं मेदिनीकोशे[1] कात्यायन-वररुची पृथक् पृथगेवाभिमतौ । कियतां कथनानुसारं वररुचिः वासवदत्ताया प्रणेतुः सुबन्धोः मातुल आसीत् । तथा केचन विश्वसन्ति यद्वररुचिः राज्ञो विक्रमादित्यस्य समये बभूव । अतो वररुचि-कात्यायनयोरभेदकल्पनाऽनुपयुक्ता प्रतिभाति । केचन वररुचिं कात्यायनस्याचार्यं कथयन्ते । कात्यायनेनाष्टाध्याय्याः सूत्रेषु वार्तिकप्रणयनसमयेऽनेकेषु स्थलेषु पाणिनेः भ्रमनिर्देशः कृतोऽस्ति तथा स्वेच्छया तत्र परिवर्तनमपि कृतम् । कात्यायनः पाणिनेरज्ञताया अन्वेषणायाधिकं चेष्टते स्म निरन्तरम् । वार्तिकसंख्यानिर्देशसमये नागेशेनोक्तमस्ति यत् पाणिनेः सूत्रेषु अनुक्त दुरुक्त-

---

१. कात्यायनो वररुचौ विशेषे च मुनेः पुमान् ।

विषयाणां सहजबोधसम्पादनार्थं वार्तिककारेण समालोचना कृताऽस्ति ।[१]

कियतां विपश्चितां दृष्टौ न पाणिनीयसूत्राणां समर्थनाय अपितु निन्दनीयं विधातुं कात्यायनेन वार्तिकानि लिखितानि । यदि कात्यायनस्येदं लक्ष्यं नासीत्तदा-तेन तत्र कथं दोषप्रदर्शनाय प्रयासः कृतः । कुत्रचिद् निर्दोषे पाणिनौ आक्रमणं कृत्वाऽऽत्मनः कलहप्रियतायाः परिचयो दत्तः । यथा—वररुचिना कृतो ग्रन्थः वाररुचः । अत्र कात्यायनः कथयति मक्षिकाभिः कृतं माक्षिकं मधु अपि भवति । पुनरग्रे-पाणिनिना क्षौद्र-सारघ-पौण्ड्रकशब्दानां साधनप्रणाली निर्दिष्टा, तत्र कात्यायनो ब्रवीति—द्वयोरेकत्र कथनेनैव कार्यं सेत्स्यति 'कृते ग्रन्थे संज्ञायाम्' इत्येकं सूत्रं कृत्वा पाणिनौ आक्रमणं कृतवान् । परन्तु भाष्य-कारेण पतञ्जलिना कृते ग्रन्थे ( ४।३।११६ ) तथा संज्ञायाम् ( ४।२।११७ ) इति सूत्रद्वयं पृथक् पृथक् प्रमाणितम् । अतः कात्यायनः पाणिनेर्महान् प्रतिद्वन्द्वी आसीत् तेन तत्र दोषप्रदर्शनाय महान् प्रयासः कृतः । कात्यायनेन पाणिनेः ४००० सूत्राणां मध्ये १५० सूत्रेषु भ्रममुत्पाद्य स्वं सिद्धान्तं स्वीकारयितुं महान् प्रयासः कृतोऽस्ति ।

परं पाणिनिना यानि सूत्राणि प्रणीतानि तानि अद्यत्वेऽपि तथैव प्रमाणानि मन्यन्ते । समस्तं विश्वं 'पाणिनेः वैज्ञानिकप्रतिभायां चकितं वर्तते । कत्यायनस्य भीषणे प्रहारेऽपि पाणिनेः सिद्धान्तो नेषदपि विचालितः । भारतीया मनीषिणः पाणिनिमाचार्यं भवानीजानेः भगवतः शिवस्यावतारं मत्वा तत्र नतमस्तका भवन्ति तत्समादरं च कुर्वन्ति । अद्ययावत् संस्कृतभाषाया यावन्ति व्याकरणानि निर्मितानि तेषु साम्प्रतं पाणिनीयं व्याकरणं सर्वतोऽतिशायि साङ्गोपाङ्गपूर्णं च वर्तते। इदं प्राचीनस्य वाङ्मयस्यापूर्वो निधिः । अनेन देववाण्याः प्राचीनमर्वा-चीनं च समस्तं वाङ्मयं सूर्यालोकवत् प्रकाशितं वर्तते । अस्यात्यन्तं सुन्दरीं सुव्यवस्थितां सुसम्बद्धां सूक्ष्मतमपदार्थद्योतनक्षमतापूर्णरचनां दर्शं दर्शं प्रत्येकं विद्वांसो मुक्तकण्ठं प्रशंसन्ति । भारतीयप्राचीनाचार्याणां सूक्ष्मचिन्तनस्य सुपरि-पक्वज्ञानस्य अद्भुतप्रतिभायाश्च निदर्शकोऽयमनुपमो ग्रन्थो वर्तते । एतेन देववाणी परमं गौरवान्विता विश्ववन्दिता च विद्यते । विश्वस्मिन् कस्या अपि प्राचीनाया अर्वाचीनायाश्च भाषाया एतादृशं परिष्कृतं वैज्ञानिकं च व्याकरणं नाद्यावधि निर्मितम् । पाणिनीयशब्दानुशासनस्य पर्यवेक्षणया प्रतीयते यत् पाणिनिर्न केवलं शब्दशास्त्रमात्रस्यैव परिज्ञाताऽऽसीत्, प्रत्युत भूगोल-खगोल-इतिहास-मुद्राशास्त्र-लोकव्यवहारादीनामपि अद्भुतो विद्वानासीत् । स हि प्राचीनार्वाचीनयोः कालयोः सम्बन्धयिता एकः सेतुरस्ति ।

---

१. अनुक्तदुरुक्तचिन्ताकारित्वंवार्तिकत्वम् ( नागेशकृत कैयटटीका )

कात्यायनो हि पाणिनेः महान् प्रतिद्वन्द्वी आसीत्। पाणिनेरनेकेषु सूत्रेषु कात्यायनेन दोषप्रदर्शनार्थं वार्तिकानि लिखितानि। वस्तुतो न कात्यायनसमानः कश्चन विद्वेषबुद्ध्या पाणिनेरालोचनं कृतवान्। कात्यायनोऽपि पाणिनेः तत्तत्-स्थलेषु दोषमुद्भावयन्नात्मनो' बुद्धिवैभवं प्रदर्शितवान्। यदि कात्यायनः पाणिनीय-ग्रन्थेऽज्ञताप्राचुर्यं जानीयात्तदा तत्र स वार्तिकं न लिखेत् नापि पतञ्जलिस्तत्र भाष्यं कुर्यात्। अतः कात्यायनस्य सूक्ष्मविवेचनशक्त्या बुद्धिवैशद्यप्रदर्शनमात्रम्, नतु पाणिनेः सूत्राणां खण्डने दोषदर्शने च तस्य तात्पर्यम्।

महाभाष्ये पतञ्जलिना अनेकेषु सूत्रेषु कात्यायनस्य पाणिनौ महदाक्रमणं विफलयितुं प्रयासः कृतोऽस्ति। वास्तविकरूपेण वार्तिककारस्य कात्यायनस्याक्रमण-विफली करणे पतञ्जलेर्महाभाष्यमेकोऽमोघो दुर्भेद्यश्च दुर्गोऽस्ति।

कात्यायनो हि पाणिन्यनन्तरं पतञ्जलेः पूर्वं जातः। यद्यपि कात्यायननामा कश्चन बुद्धस्य शिष्योऽप्यासीत्, किन्तु अनेन कात्यायनेन ऋषिणा बुद्धशिष्यस्य कात्यायनस्य न कश्चन सम्पर्कः आसीत्।

कात्यायनेन पाणिनिसूत्रेषु वार्तिकातिरिक्तं शुक्लयजुर्वेदसंहितायां माध्यन्दि-नप्रातिशाख्य-सर्वानुक्रमणी-वैदिककल्पसूत्राणामपि रचना कृता।

वेवरः कात्यायनं पूर्वदेशवासिनं मनुते परं रामकृष्णगोपालभाण्डारकरो महा-भाष्यस्यैकं वाक्यमुद्धृत्य कात्यायनं न पूर्वदेववासिनमपि तु दाक्षिणात्यं साधयति।

'यथा लौकिकवैदिकेषु' इति कात्यायनवार्तिकं लक्ष्यीकृत्य भगवान् पतञ्जलिः कथयति 'प्रियतद्धिता हि दाक्षिणात्याः यथा लोके वेदे च वक्तव्ये लौकिकेषु वैदि-केषु इति प्रयुञ्जते'। अतोऽपि प्रतीयते यत् कात्यायनोः दाक्षिणात्य एवासीत्।

## पतञ्जलिस्तद्भाष्यं च

पाणिनिकात्यायनयोरितिहासवत् पतञ्जलेरितिहासोऽप्यन्धकाराच्छन्नः। महा-भाष्यस्य कृपया पतञ्जलिकालिकेषु अनेकेषु विषयेषु स्पष्टं प्रकाशो जायते। यथा व्याकरणक्षेत्रे महाभाष्यं शीर्षस्थानीयं विराजते तथैव पतञ्जलेः कालनिरूपण-करणे ततो महत्साहाय्यमवाप्यते। यदि महाभाष्ये समागतानामुदाहरणानां सम्यक् परीक्षा क्रियेत तदा नूनं पतञ्जलेः जीवनवृत्तान्तादि ज्ञानं जायेत।

पाणिनेः 'अनद्यतने लङ्' ( ३। २। १११ ) इतिसूत्रस्याशयो वर्तते यद् अनद्यतनघटनाक्रियास्थले लङ्लकारस्य प्रयोगो भवति। कात्यायनोऽस्य व्याख्यानं कुरुते यद् या घटना दर्शनविषयातीता सती अपि लोकप्रसिद्धा स्यात्तत्र लङ्लकार प्रयोगो विधातव्यः। पतञ्जलि हि कात्यायनमतपोषणं कुर्वन् उदाहरणद्वयं प्रदत्तवान्-'अरुणद् यवनः साकेतम्' 'अरुणद् यवनो माध्यमिकाम्' इति। एतेन प्रतीयते यत् पतञ्जलिना यवनकर्तृकमाक्रमणन्तु स्वचक्षुर्भ्यां न दृष्टं, परन्तु घटना तत्कालिनैवासीदिति।

अनयोरुदाहरणयोरतिरिक्तं महाभाष्येऽनेकैतिहासिक घटनाया वर्णनं विद्यते येन पतञ्जलिकालनिर्द्धारणे महत् सौविध्यमुपतिष्ठते ।

पाणनिना हि वर्तमाने लट् ( ३ । २ । १२३ ) इति सूत्रेण वर्तमानकाले लट्लकारस्य प्रयोगनियमः कृतः अत्र कात्यायनेन प्रोच्यते यत् आरब्धाकार्यस्य पूर्णतापर्यन्तं लट् लकारो भवति । पतञ्जलिनास्यानुमोदनं कुर्वता प्रोक्तं यत् प्रकृतकर्मणोऽविरामपर्यन्तं लट्लकार प्रयोगो जायते[1] ।

पाणिनिना हेतुमति च ( ३ । १ २६ ) इति सूत्रे निर्देशः कृतोऽस्ति यद् यदि किञ्चित् कार्य अन्यद्वारा सम्पद्येत तत्र णिजन्तक्रियायाः प्रयोगो भवति पाणिनेरनेन नियमेनोपगता यजादिधातव णिजन्ते परिणता भवन्ति ।

अत्र कात्यायनेन प्रोक्तं यद् धातौ न कश्चन विर्य्ययो भवति । पतञ्जलिनापि कात्यायनस्य पोषणं कुर्वता उदाहरणं प्रदत्तम्[2] । एवमिह पूर्वोक्तैरुनाहरणै पतञ्जलिकालस्य निर्णये महत् साहाय्यमुपजातते । उक्तोदाहरणेन स्पष्टं प्रतीयते यत् पतञ्जतिः पुष्पमित्र समकालिक आसीत् । अन्यथा वर्तमानकाले पुष्यमित्र-यज्ञानुष्ठानस्य दृष्टान्तो नोपन्यन्तः स्यात् ।

इतिहासानुसारं वाह्लीकसिंहासने समासीनः सुप्रसिद्धो ग्रीकराजः डेमेट्रियसः ( १६५ ई० पू० ) साकेतं माध्यमिकं च समाक्रान्तवान् । पुष्पमित्रस्य राज्य काले डेमेट्रियसेन भारतदिग्विजयाय प्रवृत्तम् । अनया घटनया पाणिनेः ऽअरुणद् यवनःसाकेतम्, अरुणद् यवनो माध्यामिकामित्युदाहरणस्य सामञ्जस्यं जायते । अतोऽनायासं सिध्यति यत् पतञ्जलिः यवनराजडेमेट्रियसस्य शुङ्गवंशीयनृपतेः पुष्पमित्रस्य च समकालिक आसीत् ।

नागेशभट्टानुसारं पतञ्जले र्मातुनाम गोणिकाऽऽसीत्[3] । किंवदन्त्यनुसारं पतञ्जलेः जन्मस्थानं गोनर्ददेश आसीत् । अतएव पतञ्जलिः गोनर्दीयः प्रोच्यते । भण्डारकरेण अयोध्यात उत्तरपश्चिमे वर्तमानः साम्प्रतिको जिलागोण्डा गोनर्दो मन्यते।

---

१. वर्तमाने लट् ( ३ । २।१२३ )

**वार्तिकम्**—प्रवृत्तस्याविरामे शिष्या भवन्त्यावर्तमानत्वात् ।

**भाष्यञ्च**—प्रवृत्तस्याविरामे शाशितव्या भवन्ति । इहाधीमहे, इह वसामः, इह पुष्यमित्रं याजयामः । किं पुनः कारणं न सिध्यति, अवर्तमानत्वात् ।

२. हेतुमति च ( ३ । १ । २६ )

**वर्तिकम्**—यज्ञादिषु विपर्यासः ।

**भाष्यम्**—यज्ञादि च विपर्यासो वक्तव्यः । पुष्यमित्रो यजते, याज्ञिका याजयन्तीति । तत्र भवितव्यं पुष्पपुत्रो यजते, याजका याजयन्तीति ।

३. गोणिकापुत्रो भाष्यकार इत्याहुः ( १ । ४ । ५१ )

## पाणिनीयव्याकरणविषये पौर्वात्य-पाश्चात्यमतम्

महाभाष्यकारो भगवान् पतञ्जलिः पाणिनिविषये लिखति यत्—

'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण, (१।१।१)।

पुनरग्रे लिखति–

**सामर्थ्ययोगान्नहि किञ्चिदस्मिन्**
**पश्यामि शास्त्रे यदनर्थकं स्यात्** (६।१।७७)

अशेषशेमुषीसम्पन्नस्य तर्कप्रवणस्य पतञ्जलेः पाणिनीयशास्त्रविषये उक्तो लेखः तस्यात्यन्तं महत्तां व्यनक्ति।

काशिकाकारो जयादित्यः 'उदक् च विपाशः (४।२।७४) इति सूत्रवृत्तौ लिखति–महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य।

प्रसिद्धचीनीयात्री ह्वेनसांगो लिखतियत् 'ऋषिणा पूर्णमनसा शब्द भण्डारतः शब्दानसञ्चयत्…अत्र प्राचीनार्वाचीनसमस्त लिखिनं ज्ञान समाप्तम्।[1]

ऋग्वेदभाष्यकारो वेङ्कट माधवो लिखति–

शाकल्यः पाणिनिर्यास्क इत्यृगर्थ परस्त्रयः[2]।

वेदार्थे स्वरज्ञानं सर्वतः प्रधानं साधनम्। पाणिनिना स्वरशास्त्रास्य सूक्ष्मविवेचनदृष्ट्या न केवलं प्रत्ययस्यादेशस्य च चित्-ञित्-नित्प्रमृतिषु अनुवन्धेषु-ध्यानं दत्तम्, अपितु ४०० सूत्राणि स्वरविशेषपरिज्ञानाय प्रणीतानि सन्ति। अतः पाणिनेः वेदज्ञता विस्पष्टं विद्यते।

इङ्ग्लेण्डदेशस्य प्रो० मोनियम् विलियम्सः कथयति-सस्कृतं व्याकरणं तस्य मानवमस्तिष्कप्रतिभाया आश्चर्यतम आदर्शोऽस्ति यत् केनापि देशेन नद्यावधि आविष्कृतम्।[3]

जर्मनदेशस्थो मैक्समूलरो ब्रवीति–हिन्दूनां व्याकरणान्वययोग्यता विश्वस्य कस्या अपि-जातेः व्याकरण साहित्यादाधिकं विद्यते।

लोकब्रुकमतमस्ति यद् व्याकरणस्य नियमोऽत्यन्तसतर्कतया कृतोऽस्तितथा तस्य शैली प्रतिभापूर्णा विद्यते।

सरहन्टरः कथयति यत् विश्वव्याकरणे पाणिनिव्याकरणं शेखरीभूतमस्ति। तस्य वर्णशुद्धता भाषाया धात्वन्यसिद्धान्तः प्रयोगविधयश्चाद्वितीया अपूर्वाश्च सन्ति।

---

१. वाटर्स का का अनुवाद भाग १ पृ० २२१।

२. मन्त्रार्थानुक्रमणी ऋग्भाष्य ८।३

३. महान् भारत पृष्ठ १४९-१५०

पतञ्जलेः जन्मस्थानं गोनर्द देश आसीत् । अतएव पतञ्जलिः गोनर्दीयः प्रोच्यते भण्डारकरेण अयोध्यात उत्तरपश्चिमे वर्तमानः साम्प्रतिको जिलागोण्डा गोनर्दो-मन्यते । एङ् प्राचां देशे ( १।१।७५ ) इति सूत्रस्य काशिकावृत्तौ एणीपचनीयः, गोनर्दीयः, भोजकटीय इत्याद्युदाहरणैः अयं गोनर्दीयः प्राच्यदेशवासी प्रतीयते ।

पतञ्जलिना महाभाष्यातिरिक्तं पाणिनीयव्याकरणेऽनेकानि वार्तिकान्यपि लिखितानि, तानि इष्टयः कथ्यन्ते, पतञ्जलिना महाभाष्ये स्वविचारनैपुण्यस्य परिचयो दत्तोऽस्ति । पाणिनेरष्टाध्याय्याः कात्यायनवार्तिकस्य च विद्यमानत्वेऽपि व्याकरणस्य याऽङ्गहीनताऽऽसीत्, सा महाभाष्यं विलिख्य पूरिता तेन। अतः पत-ञ्जलेः महाभाष्यपर्यन्तमुपस्थाय संस्कृतव्याकरणं चरमं सीमानमुपगतम् ।

कैयटेन महाभाष्ये एका टीका लिखिता, यस्या नाम महाभाष्यप्रदीपोऽस्ति । नागेशभट्टेन च भाष्यप्रदीपे प्रदीपोद्योतनाम्नी व्याख्या लिखिता । कालान्तरे अनयोरेवावलम्बनं विधाय टीकास्वपि टीका जाताः । महाभाष्ये भर्तृहरिकृता वाक्यपदीयनामिका एका टीकाऽपि श्रूयते । एतदतिरिक्ता कारिकानम्ना भर्तृ-हरेरेकाच्छन्दोभयी रचनाऽपि दृष्टिगोचरी भवति, या वाक्यपदीयेत्यख्यया प्रसिद्धा वर्तते । वाक्यपदीये काण्डत्रयं विद्यते-ब्रह्मकाण्डं, वाक्यकाण्डं, पदकाण्डं च । वाक्य-पदीयस्य द्वितीये काण्डे लिखितमस्ति यत् पतञ्जलिना व्याडिप्रणीतं सङ्ग्रहं विलुप्तप्रायं विलोक्य सर्वात्तिकमहाभाष्यस्य रचना कृता ।

वस्तुतो व्याकरणशास्त्रस्य वास्तविको विकासः पाणिनित आरभ्य पतञ्जलिं यावदागत्य चरमं सीमानमुपगतं सदवरुद्धम् । ततः किञ्चित्कालं विरम्य व्याकरणस्य विकासधारायाः प्रवाहो व्याख्यारूपेण प्रावहत् ।

## व्याख्याकालः

वामन-जयादित्यकृतकाशिकातो व्याकरणशास्त्रस्य व्याख्या प्रारभते । काशिका हि द्वयोः वामन-जयादित्ययोः सम्मिलितप्रयासस्य फलमस्ति । केचन वामन-जयादित्यमेकं मनुते, परन्तु भट्टोजीदीक्षितेन प्रौढमनोरमायामुभौ पृथक् पृथक् प्रोक्तौ स्तः ( ५ । ४ । ४२ ) जयादित्येनारम्भतोऽष्टाध्याय्याः पञ्चसु अध्यायेषु तथा वामनेनान्तिमेषु त्रिषु अध्यायेषु काशिकेति नाम्नी व्याख्या विहीता ।

जयादित्य-वामनाभ्यां काशिकाया आरम्भे प्रचलितपद्धत्यनुसारं मङ्गलाचरणं न कृतमतो विद्वद्भिरेतौ बौद्धावभिमतौ स्तः । काशिकायाः पश्चात् न्यासस्य नाम आगच्छति, न्यासो हि काशिकाया अस्ति व्याख्या । अस्या नाम काशिकाविवरण-पञ्जिकाऽप्यस्ति । जिनेन्द्रबुद्धिरस्यास्ति लेखकः । स कथयति यन्मया ग्रन्थानां

सारं संगृह्य काशिकाया वृत्तिर्विवरणपञ्जिका[1] क्रियते। हरदत्तस्य पदमञ्जरी काशिकाया बृहत्तरा व्याख्याऽस्ति।

**प्रक्रियाकालः**

महामुनिपतञ्जलिपर्यन्तं व्याकरणमत्यन्तं समुन्नतं जातमतः परवर्तिषु ग्रन्थेषु व्याख्या समारब्धा, परन्तु व्यकरणं दिनानुदिनं दुरूहतरमेवाभवत्। तत्परिज्ञाने काठिन्यमुपस्थितमतो व्याकरणं सरलीकर्तुं विमलसरस्वतीद्वारा रूपमालाया निर्माणं जातम्। रूपमालायां प्रत्याहार-संज्ञा-परिभाषानन्तरं स्वरसन्धि-प्रकृतिभाव-व्यञ्जनसन्चि-विसर्गसन्धि-हलन्त–सर्वनाम–वैदिक-विकल्प–निपात-स्त्रीलिंग-कारकाख्यात-कृत्तद्धित-समासप्रकरणानि विद्यन्ते। ग्रन्थोऽयं पश्चाद् भाविनीनां कौमुदीनां जन्मदाता कथ्यते।

रूपमालानन्तरं पञ्चदशशताब्द्याः पूर्वार्द्धे ऐतिहासिकाधारेण रामचन्द्रस्य प्रक्रियाकौमुद्या नाम उपतिष्ठते। अस्या अनेकाः टीकाः सन्ति। तत्र विठ्ठलाचार्यस्य प्रसादटीका शेषकृष्णस्य च प्रक्रियाप्रकाशः प्रसिद्धौ स्तः। प्रक्रियाकौमुदी हि भट्टोजीदीक्षितस्य ( १६३० ई० ) कृते आधारभूमिरासीत्। भट्टोजीदीक्षितस्य हि सिद्धान्तकौमुदी अत्यन्तं प्रसिद्धा महत्त्वपूर्णा सर्वातिशयिनी च वर्तते। अस्य पितुर्नाभ लक्ष्मीधर आसीत्। अनेन स्वसिद्धान्तकौमुद्याः स्वयमेव टीका कृता, या प्रौढमनोरमानाम्ना व्यवहृता विद्यते। एतेन काशिकासमानाधारभूमौ शब्दकौस्तुभस्यापि रचना कृता। प्रौढमनोरमायां पण्डितराजस्य जगन्नाथस्य कूचमर्दिनी नाम्नी टीका प्रकाशिता वर्तते। हरदीक्षितेनापि प्रौढमनोरमायां शब्दरत्नाख्या व्याख्या कृता। अनन्तरं वरदराजभट्टाचार्येण मध्यसिद्धान्तकौमुदी-लघुकौमुदी च प्रणीते। ये प्रारम्भकर्तॄणां व्याकरणपिपठीषूणां बालकानां कृतेऽत्यन्तमुपयोगिन्यौ स्तः।

तथाहि—

नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान्।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम्॥

आपि च—

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम्॥

एवं काशिका-सिद्धान्तकौमुद्यो र्द्वयोरुद्देश्यमेकमेवास्ति, परं तयोः केवलं विवेचन शैलीमात्रमेव भिन्नमस्ति। अथापि–'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्

---

१. अन्यतः सारमादाय कृतैषा काशिका यथा।
वृत्तिस्तस्या यथाशक्तिः क्रियते पञ्जिका तथा॥

इति मत्वा पाणिनिना कृतामष्टाध्यायीमेवावलम्ब्य सर्वेषां वैयाकरणविपश्चितां प्रवृत्तिः कृतिश्चाग्रे प्रवृता दृश्यते ।

**मुनित्रयविमर्शः**

भगवता पाणिना प्रोक्तं व्याकरणं पाणिनीयं व्याकरणं प्रोच्यते । पाणिनीय-व्याकरणशास्त्रे त्रयाणां पाणिनि-कात्यायन-पतञ्जलीनां स्थानं महत्त्वपूर्णं वरीवर्ति । तत्र-पाणिनिना सूत्राणि प्रणीतानि, कात्यायनेन वार्तिनानि कृतानि, पतञ्जलिना च तत्र महाभाष्यं विरचितम् । तथाचोक्तम्

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥

एतेषां प्राधान्यात् पाणिनीयं व्याकरणं त्रिमुनि अपि प्रोच्यते । हरदत्तस्य पदमञ्जर्यां मुनित्रयस्य परस्परसम्बन्धबोधकमेकं पद्यमुपलभ्यते यत्र निर्णीत-मस्ति यत् सूत्रकारद्वारा विस्मृतमदृष्टं वा विषयं वाक्यकारः = वार्तिकरचयिता स्पष्टतः प्रतिपादयति, तेनाप्यदृष्टस्य विवेचनं भाष्यकारः कुरुते । तथाहि

यद् विस्मृतमदृष्टं वा सूत्रकारेण तत् स्फुटम् ।
वाक्यकारं ब्रवीत्येवं तेनादृष्टं च भाष्यकृत् ॥

व्याकरणसम्प्रदायस्य परिनिष्ठितं मतमस्ति--**यथोत्तरं मुनीनां प्रामाण्यम् ।** एतदनुसारं सूत्रकार-वार्तिककारापेक्षया भाष्यकारस्य मतं प्रशस्तं मन्यते । एतस्य नायमर्थोऽस्ति यत् सूत्रकार-वार्तिककारयो र्मतमप्रामाणिकमस्ति, प्रत्युत उत्तर-मुनितात्पर्ये एव पूर्वस्य मुनेरस्ति तात्पर्यम् । एतत्सिद्धान्तानुसारेण पाणिनेर्मतात् श्रेष्ठं कात्यायनस्य मतं कात्यायनाच्च श्रेष्ठतरं भगवतः पतञ्जलेर्मतं मन्तव्यम् । भगवान् पतञ्जलिर्हि शास्त्रापेक्षया व्यवहारस्याधिकं महत्त्वं मनुते । सूत्र-वार्तिक-द्वारा यन्न सिध्यति तदिष्टिद्वारा साध्यते । व्यावहारिकप्रयोगान् शास्त्रीयमर्या-दायां बद्धुं भाष्यकार इष्टीनां निर्माणं कृतवान् । इतरभाष्यापेक्षया महाभाष्यस्य वैलक्षण्यमिष्टीनां निर्माणमेवास्ति ।

महाभाष्यकारेण वार्तिकानि लक्ष्यीकृत्य कथयति यत् तानि वार्तिकानि कदाचित् तान् विषयान् चर्चयन्ति, ये सूत्रेषु नोपात्ताः सन्ति तथा कदाचित् कथितानामपि विषयाणां प्रत्याख्यानं कुर्वन्ति ।

**'इह किञ्चिदक्रियमाणं चोद्यते । किञ्चिच्च क्रियमाणं प्रत्याख्यायते ॥ ( महाभाष्ये ३।११२ ) ।**

वस्तुतो वार्तिकानि सूत्राणां व्याख्यानानि सन्ति । अतस्तत्र सूत्रवत् संक्षिप्तीकरणं नाभिप्रेयते । वार्तिकाणां मुख्यं तात्पर्यं भावानां प्रकटीकरणम्, असङ्गतीनां

समन्वयः, आक्षेपाणामुत्तरदानम्, तथा त्रुटीनां सम्मार्जनं च भवति। एतत् सर्ववार्तिकेष्वेव संभवति, न सूत्रेषु। एवं कात्यायनवार्तिकनामुद्देश्यं पाणिनीय-व्याकरणस्य दार्शनिकविचारकोटौ समुपस्थापनमप्यस्ति, येनेदं पाणिनीयं व्याकरणं न केवलं शब्दानां रूपसिद्धेः साधनमपितु शब्दार्थयोः गभीरतत्त्वानां निरूपकमपि सिद्धं स्यात्। कात्ययनस्य प्रथमं वार्तिकम् **'सिद्धे शब्दार्थसम्बन्धे'** इति एतदेव व्याकरणदर्शनस्य मौलिकतथ्यस्य चावतरणं कुरुते। शब्दः तस्यार्थः तथा तयोः परस्परसम्बन्धश्चेतित्रयं सिद्धं=नित्यं मत्वैवेदं दार्शनिकं पाणिनीयं व्याकरणशास्त्रमुपनिबद्धमस्ति।

## भगवान् पाणिनिः

संस्कृतभाषायाः व्याकरणग्रन्थेषु सूत्रात्मकं पाणिनिना प्रोक्तं पाणिनीयं व्याकरण मेव सर्वाङ्गपूर्णमुपलभ्यते। इदमस्ति प्राचीनवाङ्मयस्यापूर्वो निधिः। अस्यात्यन्त सुन्दरं सुसम्बद्धं संयतं सूक्ष्मतमं पदार्थप्रकाशनक्षमं रचनाविशेषं दर्शं दर्शं च स विचारप्रवणा विद्वांसो मुक्तकण्ठमेतद्व्याकरणं प्रशंसन्ति। भारतीयानां सूक्ष्मविवे चनपरिपक्वज्ञानस्याद्भुतप्रतिभायाश्च निदर्शनं पाणिनीयं व्याकरणमनुपमं विद्यते एतेनामरवाणी परमं गौरवान्विता। विश्वस्मिन् कस्या अपि भाषाया एवंवि सुव्यवस्थितं परिष्कृतं च व्याकरणं नाद्यावधि निर्मितम्। पाणिनीयशब्दानुशासनस सूक्ष्मपर्यवेक्षणेन प्रतीयते यत् न केवलं भगवान् पाणिनिः शब्दशास्त्रमात्रस्यै परिज्ञाताऽऽसीत्, अपितु प्राचीने वाङ्मये तस्याप्रतिहता गतिरासीत्। लौकि वैदिकवाङ्मयातिरिक्तानां भूगोलेतिहास-मुद्राशास्त्र-लोकव्यवहारादीनामपि अ मद्वितीयो विद्वानासीत्। कथासरित्सागरेऽयं महापद्मनन्दस्य समकालिकः प्रोक्तो स्ति। आर्यश्रीमूलकल्पे चायं महापद्मस्य सुहृत् कथितो विद्यते—

**'तस्यान्यतमः सख्यः पाणिनि र्नाम माणावः'** (४।१।४) अनेन हिमाल तपसा महेश्वरं सन्तोष्य मनोऽभिलषितं वरं प्राप्य लोकोत्तरम् अष्टसु अध्याये प्रायः चतुःसहस्रसूत्ररूपेण विभक्तं व्याकरणं व्यरचि।

सूत्रलक्षणं च—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥

कस्यापि व्याकरणस्य सम्पूर्णतायै पञ्चाङ्गानि अपेक्षितानि। एषु सूत्रप एवास्ति मुख्यः सहायकत्वादितरेषामुपयोगिता भवति। तानि च पञ्चाङ्गानि- (१) सूत्रपाठः (२) धातुपाठः (३) गणपाठः (४) उणादिपाठः त (५) लिङ्गपाठः। पाणिनीयं व्याकरणं सर्वप्राचीनं पुष्टं सुव्यस्थितं चासि अत्रैव शिक्षापि समाविष्टाऽस्ति। तथाचोक्तम्—

अष्टकं गणपाठश्च धातुपाठस्तथैव च।
लिङ्गानुशासनं शिक्षा च पाणिनीया अमी क्रमात्॥

**वार्तिककारः कात्यायनः**

पाणिनीयसूत्रेषु अनेकैराचार्यैर्वार्तिकानि कृतानि, तेषु कात्यायनकृतानि वार्तिकानि अतिप्रसिद्धानि महत्वपूर्णानि च सन्ति। अत एव भगवता पतञ्जलिना महाभाष्ये मुख्यतया कात्यायनवार्तिकानामेव व्याख्यानं कृतम्, अपर आह इत्यादिना च तत्र तत्र अनेकेषां वार्तिककाराणां वचनान्यपि उपस्थापितानि। वार्तिकलक्षणञ्च पराशरोपपुराणे—

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुः वार्तिज्ञा मनीषिणः॥**

३।२।११८ सूत्रभाष्ये किं वार्तिककारः प्रतिषेधेन करोतीति ब्रुवन् पतञ्जलिमुनिः भगवन्तं कात्यायनं वार्तिककारेति नाम्ना व्यपदिशति। भर्तृहरिश्च महाभाष्यदीपिकायां तं वाक्यकारं ब्रूते—'एषा भाष्यकारस्य कल्पना न वाक्यकारस्य, एवमेव कुमारिलभट्ट-जिनेन्द्रबुद्धि-क्षीरस्वामि-हेलाराज-हेमचन्द्र-हरदत्त-सायण-नागेशप्रभृतयोऽपि विद्वांसो वार्तिककारं कात्यायनं वाक्यकारं कथयन्ति। पुरुषोत्तमदेवेन त्रिकाण्डशेषे वार्तिककारस्य कात्यः कात्यायनः पुनर्वसुः मेधाजित् वररुचिरिति पञ्च नामानि निर्दिष्टानि। तेषु कात्य इति गोत्रप्रत्ययान्तं नाम, कात्यायन इति युवापत्यप्रत्ययान्तं, पुनर्वसुरिति नाक्षत्रं नाम, मेधाजिदिति अप्रसिद्धं नाम, न कुत्राप्युपलभ्यते। वररुचिरिति तु प्रसिद्धमेवास्ति नाम। कथासरित्सागरे (१।२।६६–७०) बृहत्कथामञ्जर्याञ्च कात्यायनस्य श्रुतधर इत्यपि नाम निर्दिष्टमस्ति। प्राचीनवाङ्मयेऽनेके कात्यायना निर्दिष्टाः सन्ति। एकः कौशिकगोत्रीयः, द्वितीय आङ्गिरसः, तृतीयो भार्गवः, चतुर्थो द्व्यामुष्यायणः, अर्थशास्त्रस्य समयाचारप्रकरणेऽपि कात्यायनः स्मृतोऽस्ति (५।५) कात्यायनस्य पितुर्नाम न स्पष्टं प्रतीयते, परं स्कन्दपुराणे नागरखण्डे १३० अध्याये स याज्ञवल्क्यपुत्रः स्वीकृतः। महाराज समुद्रगुप्तेन स्वकृष्णचरितस्यारम्भे लिखति यत् कात्यायनेन स्ववार्तिकैः पाणिनीयं व्याकरणं पुष्टीकृतवान्—

**न केवलं व्याकरणं पुपोष दाक्षिसुतस्येरितवार्तिकैर्यः।**

वार्तिकपाठः पाणिनीयव्यारणस्यैकं महत्वपूर्णमङ्गं वर्तते, एनमन्तरेण पाणिनीयं व्याकरणं विकलाङ्गं प्रतीयते। साम्प्रतं कात्यायनवार्तिकपाठः न स्वातन्त्र्येण क्वचनोपलभ्यते, नापि महाभाष्ये कात्यायन-वार्तिकानां निश्चिता संख्या प्रतीयते, यतो हि तत्र पतञ्जलिना प्रसंगतोऽन्येषामपि वार्तिककाराणामुपयोगीनि वचनानि संगृहीतानि सन्ति। बहुभिस्तु 'सिद्धे शब्दार्थसम्बन्धे' इति प्रथमं वार्तिकं मन्यन्ते।

क्वचन विभिन्नवार्तिककाराणां नामोल्लेखः कृतः, क्वचन च नामनिर्देशमन्तरैवान्येषामाचार्याणां वार्तिकानि उद्धृतानि कात्यायनस्य प्रथमं वार्तिकं "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इत्यस्ति, एतदेव समर्थितम् ऋग्भाष्योपोद्घाते सायणः ।

**समयः**—कात्यायनस्य देशकालयोर्विषये न किमपि दृढतरं प्रमाणामुपलभ्यते कात्यायनेन "पाण्ड्योड्यण्" इति वार्तिककरणात् पाणिनिना च तदर्थं प्रयत्नाकारणात् पाण्ड्यराज्यपरित आसीत् कात्यायनः, पाणिनेस्तु पाण्ड्यराज्यस्य परिचयो नासीदिति संभाव्य कात्यायनस्य समय ईशातः पूर्वं चतुर्थी शताब्दीति पाश्चात्यैरैतिहासिकैः स्वीकृतम्, किन्तु पाण्ड्यराज्यस्थापनकालो नाद्यावधि निर्णीतः। वार्तिककृता स्त्रीप्रत्ययसिद्धयर्थं सभाशब्दात्क्रीयमाणे प्रत्यये यदनुबन्धनासञ्जनमुपन्यस्तं तद्भाष्यकृता 'कथं स्त्रीणां सभासु साध्वी स्यात्' इत्युक्त्वा प्रत्याख्यातम् । अनेनेदमनुमीयते वार्तिककारसमये सभासु स्त्रीणां साधुत्वम् ( वक्तृत्वादिना भागग्रहणम् ) प्रचलितमासीत् भाष्यकारस्य काले तु तन्निवृत्तम् तथा च एवंविधं सामाजिकं परिवर्तनं नाल्पेन कालेन भवितुमर्हतीति, तत्र द्विशताब्दीव्यवधानेनावश्यं भाव्यम् । किं च "द्रव्याभिधानं व्याडिः" इति पाणिनिवाक्यव्याख्याकाले संङ्ग्रहग्रन्थकारस्य व्याडेर्नामस्मरणात् तत्परभवः कात्यायनः एवञ्च पाणिनेः कात्यायनस्य च महत्कालव्यवधानं भवितुमर्हति। तस्मात् ईशात् पूर्वं सप्तमशताब्दी कात्यायनकालो निर्णेतुं शक्यते । स्कन्दपुराणस्य नागरखण्डानुसारं (१७४।५५) याज्ञवल्क्यस्याश्रमः आनर्ते आसीत्। सम्भाव्यते याज्ञवल्क्यस्य मिथिलागमनानन्तरं तत्पुत्रः कात्यायनोऽपि महाराष्ट्रे गतः। अत एव स दाक्षिणात्य प्रोक्तो महाभाष्यपशपशाह्निके—**प्रियतद्धिता दाक्षिणात्याः यथा लोके वेदे प्रयोक्तव्ये लौकिकवैदिकेषु प्रयुञ्जते ।** ( १।१।१ ) कात्यायनस्य देशविषये न कुत्रापि किमपि स्वयमुल्लिखितमस्ति नापि ऐतिहासिकैरेतद्विषये स्फुटं निश्चेतुं पारितम् । 'कात्यायन' इति नामापि विभिन्नदेशकालवर्तिव्यक्तीनामुपलभ्यते श्रौतसूत्रकार एकः कात्यायनः, स्वर्गारोहणकाव्यकर्ता अन्यः, प्रातिशाख्यरचयिता अपरः, पाणिनिसूत्रवार्तिककार इतरः कौटिल्यार्थशास्त्रे राजनीत्याचार्यत्वेन ख्यातः वररुचिनाभिन्नः, विक्रमसभानवरत्नेषु प्रख्यातः पृथक् वाररुचकाव्यनिर्माता अद्वितीयः । तदत्र कस्य कस्यैक्यं कस्य कस्य वा भिन्नत्वमिति निर्णेतुमशक्यत्वात् कात्यायनस्य देशकालयो र्निर्णये महानस्ति अन्तरायः । यत् कथासरित्सारे पाणिनिकात्यायनयोः समकालिकत्वं परस्परं तयोः विद्वेषात् शास्त्रार्थादिकञ्चोपनिबद्धं तन्न प्रामाणिकं मन्यन्ते समालोचकाः, उभयोरसमानकालिकत्वात् । यदपि कथासरित्सागरे कात्यायनः कौशाम्बीवास्तव्यः प्रोक्तः तदपि न सम्भवति, यतो हि अन्वेषकाः कौशाम्बीं प्रयागपार्श्वे उद्घोषयन्ति, किं प्रियतद्धिता दाक्षिणात्या इति वदता भाष्यकृता स दक्षिणात्य आख्यात इति,

तस्य प्रयागपार्श्वकौशाम्बीवर्तित्वं सम्भवति। कात्यायनेन स्वर्गारोहणनामकमेकं काव्यमपि निर्मितमासीत्। तथा चोक्तं समुद्रगुप्तेन कृष्णचरिते मुनिकविवर्णनप्रसङ्गे स्वर्गारोहणकाव्यस्य चर्चा जल्हणकृतसूक्ति मुक्तावल्यामपि उपलभ्यते। कात्यायनस्यानेके श्लोकाः शार्ङ्गधरपद्धतौ सदुक्तिकरणामृते शुभाषितमुक्तावल्यां च प्राप्यन्ते ४।३।१०१ सूत्रभाष्ये वाररुचकाव्यस्य स्पष्टमुल्लेखोऽस्ति, वररुचिरिति कात्यायनस्यैव नामान्तरम् कृष्णचरितस्य प्रस्तावनायां मुनिकविवर्णने लिखितमस्ति यत्—

यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचिः कविः॥

अर्थात् यः कात्यायनापरनामा वररुचिः स्वर्गारोहणनामकं काव्यं विरच्य स्वर्गं पृथिव्यामानीतवान् स वररुचिः निजमनोहरेण काव्येन न केवलं पाणिनीयं व्याकरणमेव स्ववार्तिकेन पुष्टं कृतवान् अपितु काव्यरचनायामपि तस्यैवानुकरणं चकार। अत्र समुद्रगुप्तेन द्वाभ्यां नामभ्यां प्रसिद्धएक एव पुरुष स्वीकृतोऽस्ति। वररुचेः स्वर्गारोहणस्य काव्यस्योल्लेखो जल्हणेनापि स्वस्यां सूक्तिमुक्तावल्यां कृतोऽस्ति। तत्र राजशेखरनाम्ना प्रख्यातोऽयं श्लोकः—

यथार्थतां कथं नाम्नि मामूद्वररुचेरिह।
व्यधत्त कण्ठाभरणं यः स्वर्गारोहणप्रियः॥

कैयट-हरदत्त-नागेशादयः १।१।१ सूत्रभाष्यस्थान् भ्राजसंज्ञकान् श्लोकान् कात्यायनकृतानेव मन्यन्ते। क्वपुनरिदं पठितं? भ्राजा नाम श्लोकाः? ( म० भा० १।१।१ ) कात्यायनोपनिवद्धभ्राजाख्यश्लोकमध्यपठितस्य ( भा० प्र० ) कात्ययनप्रणीतेषु भ्राजाख्यश्लोंकेषु मध्ये पठितोऽयं श्लोकः ( प. म. १ पृ० १० ) भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः ( प्र० उद्योते ) वस्तुतः कात्यायनो न पाणिनेर्निन्दको न वा तत्प्रतिस्पर्धी, प्रत्युत तत्प्रशंसक एवासीत्। स हि वास्तविकव्याख्याकाररूपेण वार्तिकद्वारा यथार्थं निष्पादितवान्। अतो यथार्थतया स पाणिने न्यायसंगतः प्रशंसक एवासीत्।

## भाष्यकारः पतञ्जलिः

महामुनिना भगवता पतञ्जलिना हि पाणिनीयसूत्राणां या अत्युत्कृष्टा व्यवहारोपयोगिनी व्याख्या कृता सा संस्कृतजगति महाभाष्यनाम्ना व्यपदिश्यते। अत्र व्याकरणस्य शुष्कविषया एवंविधया सरसया सरलया सरण्या उपस्थापिता, यां मुक्तकण्ठं प्रशंसन्ति सर्वे विद्वांसः। अस्य रचनासौष्ठवं संस्कृतवाङ्मयेऽपूर्वमस्ति मञ्जुलम्। वस्तुतो महाभाष्यमेतन् न केवलं पाणिनीयव्याकरणेऽतिमहत्वाधायकमस्ति, अपितु समस्ते संस्कृतवाङ्भये इदमेकमद्भुतं प्रामाणिकं ग्रन्थरत्नमस्ति। सर्वे

वैयाकरणा एतस्य समक्षे नतमस्तका भवन्ति। महाभाष्ये हि प्रायः पाणिनीय-सूत्राणां प्रत्येकपदानां विवेचनं कृतं विद्यते। वैयाकरणा हि सूत्रवार्तिक-भाष्येषु परस्परविरोधे महाभाष्यमेव प्रामाणिकं मन्यन्ते। तथा हि ३।१।७९ सूत्रस्य प्रदीपोद्योते नागेशभट्टः—**यथोत्तरं मुनीनां प्रामाण्यम्।** १।१।२९ सूत्रप्रदीपे च कैयटः—**यथोत्तरं हि मुनित्रयस्य प्रामाण्यम्।**

अस्यायमाशयः पणिनिसूत्रविषये यत्र वार्तिककृता काचिद्विप्रपत्तिः प्रदर्शिता उपसंख्यानादिकं च कृतम्, तत्र तस्यैव वचनं ग्राह्यम्। तद्वचनसंस्कृताः प्रयोगा एव साधवो मन्तव्याः। यत्र वा वार्तिककृद्वचनानि खण्डयित्वा भाष्यकारेण कश्चन प्रयोगः समर्पितः, वार्तिकं वा प्रत्याख्यातम्। तत्र तत्र तद्वचनमेवानुसृत्य प्रयोगाणां साधुत्वमनुसन्धेयम्। यथा "न बहुव्रीहौ" इति सूत्रेण बहुव्रीहिसमासार्थ-प्रक्रियाविग्रहवाक्य एव सर्वनामसंज्ञानिषेधं कुर्वतः सूत्रकारस्य मते सर्वनामत्वा-भावेनाऽकचोऽप्रवृत्या त्वं पिता यस्येति विग्रहे स्वार्थिके कप्रत्यये त्वत्कपितृक इत्येव प्रयोगः साधुत्वेनाभ्युपगन्तव्यः, परं गोनर्दीयस्त्वाह—**अकच् स्वरौ तु कर्तव्यौ प्रत्यङ्गमुक्तसंशयौ**–इत्यकचि कृते 'त्वकत्पितृकः' इत्येव स्वीकर्तव्यम्। तस्मात्तत्र भाष्यकृद्वचनमेव श्रेष्ठं मत्वा व्यवस्था भवति।

भाष्यवार्तिकयोः पर्यालोचनया प्रतीयते यत् वार्तिककारः सूत्रकृतो न्यूनतां प्रदर्शनमेवाभिलक्ष्य वार्तिककरणे प्रवृत्तः, भाष्यकारस्तु सूत्रकृतो गौरवरक्षार्थमेव प्रववृते। अत एव स्पष्टं तेनोद्घुष्टम् वृद्धिरादैजिति सूत्रभाष्ये **'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण'।** अत एव कथासरित्सागरे पाणिनिकात्यायनयोः विद्वेषपूर्वकं परस्परशास्त्रार्थकथा प्रवृत्ता। महाभाष्यञ्चेदं वार्तिकानामेव व्याख्यानम्, वार्तिकमवलम्ब्यैव भाष्यस्य प्रायः प्रवृत्तिदर्शनात्।

पाणिनिना हि भूतार्थे लकारत्रयं विहितम्—तत्र सामान्यभूते लुङ्, अनद्यतन भूते लङ्, अनद्यतनपरोक्षे च लिडिति अद्यतने लुङ्, अनद्यतने लङ्, लिट् चेति सूत्रै-र्व्यवस्था कृता। अनद्यतने लङिति सूत्रे कात्यायनेन **'परोक्षे च लोकविज्ञाने प्रयोक्तुर्दर्शनविषये,** इति वार्तिकं पठितम्। तत्रोदाहरणप्रसङ्गे भगवान् भाष्यकारः प्राह—**अरुणद् यवनः साकेतम्, अरुणद् यवनो माध्यमिकाम्।** प्रयोक्तुर्दर्शनविषये इति किम्, **जघान कंसं किल वासुदेवः** इति। अत्र प्रदीपे कैयटः–अननुभूतत्वात्परोक्षेऽपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषय इति विरोधाभावः उद्योते च नागेशः। भाष्ये जघानेति कंसवधो हि नेदानीन्तन प्रयोक्तु-र्दर्शनयोग्योऽपीत्यर्थः, अरुणदित्युदाहरणे तु तुल्यकालं प्रवक्तेति बोध्यम्।

एतस्यायमभिप्रायः—या घटना स्वयं न दृष्टा, परं स्वकाले एव जातत्वेन दर्शनयोग्या लोकप्रसिद्धा च तस्या अदृष्टत्वेन परोक्षत्वात् पाणिनिमते लिडेव भवति, किन्तु कात्यायनमते तत्र लङ् प्रयोक्तव्य इति।

यवनकृतसाकेत-मध्यमिकावरोधस्य पतञ्जलिनाऽदृष्टत्वेऽपि तत्समकालिकत्वात् तत्र दर्शनयोग्यतासत्वेन तन्मते लङ्लकार एव प्रयोक्तव्यः। अत एव तेन भाष्ये पूर्वोक्तलङ्लकारे प्रयोगोदाहरणं प्रदत्तम्। अत्र यवनकृत साकेतमाध्यमिकावरोधश्च कदाऽभूदितिविचार्यमाणे इतिहासानुसारं ईशातः ३२७ वर्षेभ्यः पूर्वं अलेग्जण्डरस्य भारताक्रमणं प्रसिद्धम्। तदनन्तरं चन्द्रगुप्तराज्यकाले सेल्यूवसनामा यवनो भारतमाक्रान्तवान्, चन्द्रगुप्तेन च पराजितः स स्वतनयां तस्मै दत्वा स्वदेशे परावृत्तः। ततो गच्छति काले तदुत्तराधिकारी मीनाण्डरनामाऽन्यो यवनः पुष्यमित्रसमये पुनर्भारतमाचक्राम। स यद्यपि मथुरापर्यन्तमेवायातः, परं तत्सेनानायकैरयोध्यां विजित्य काशीपर्यन्तमाक्रान्तम्। तत्सहचारिण्येवैका सैन्यपंक्तिः चित्तोरपार्श्ववर्तिनीं माध्यमिकानगरीं समाक्रान्तवती। एवं पतञ्जलेः महाभाष्ये पाटलिपुत्र-बृषलकुल-यवनाक्रमण-साकेतमाध्यमिकावरोध-पुष्यमित्रसभादीनां वर्णनात् महाभाष्यकारं पतञ्जलिं शुङ्गवंशीपुष्यमित्रात्पूर्वं मन्तुं न शक्यते। सोऽयं साकेतमाध्यमिकावरोधः। एतेनेदं सिद्धति यत् पुष्यमित्रराज्यकाले एव यवनैः साकेत मध्यमिकावरोधो विहितः। स एव भाष्यकारस्य पतञ्जलेः समयः। इत्थम् 'इह पुष्यमित्रं याजयामः (३।२।१२३) पुष्यमित्रो यजते, याजका याजयन्ति (३।१।२६) इत्यादिवर्तमानकालिकोदाहरणैः स शुंगवंशीयपुष्यमित्रकालिकः ईशायाः प्रथमशताब्द्यामेव भारतभुवं स्वजन्मनालञ्चकार।

अद्यत्वे पाणिनीयव्याकरणस्य यादृशी प्रतिष्ठा यथा वा शास्त्रेषु मुख्यं स्थानं गण्यते। सोऽयं भगवतः पाणिनेः कात्यायनस्य पतञ्जलेश्च प्रभावः। पतञ्जलिकृतं महाभाष्यं न केवलं व्याकरणस्यैव निवन्धः किन्त्वत्र सर्वे ज्ञातव्या विषयाः, लौकिका व्यवहाराः प्राक्तना इतिहासा आवश्यका धर्मा दर्शनानां सिद्धान्ता गूढतमानि विज्ञानानि च तत्र तत्र सपरिकरं विवेचितानि सन्ति। वैज्ञानिका यमाकर्षणसिद्धान्तं न्यूटनेनाविष्कृतं मन्यन्ते, स तु भगवता पतञ्जलिना स्थानेऽन्तरतम इति सूत्रभाष्ये वहुपूर्वमेव समुद्घोषितः। सिद्धान्तशिरोमणौ भास्कराचार्येणापि सांटीपं समर्थितो विद्यते—

> पाणिनीयव्याख्यानभूतत्वेऽपि इष्ट्यादिकथनेन।
> अन्वाख्यातृत्वादस्य इतरभाष्यवैलक्षण्येन महत्त्वम्॥

इति प्रदीपे कैयटेनान्यभाष्यापेक्षया महाभाष्ये विशदतया वैलक्षण्यं प्रदर्शितम्।

भर्तृहरि—( गोनर्दीयस्त्वाह तस्माद् भाष्यकारो व्याचक्षति १ । १ । २१ ) कैयट—( भाष्यकारस्त्वाह तत्प्रदीप १ । १ । २१ ) नागेश—( गोनर्दीयपदं व्याचष्टे भाष्यकार इति १ । १ । २१ ) राजशेखर—( यस्तुप्रयुङ्क्ते···तत्प्रमाणमेवेति गोनर्दीयः का० मी० ) प्रभृतयो ग्रन्थकाराः विद्वांसः गोनर्दीयं पतञ्जलेर्नामान्तरं स्वीकुर्वन्ति । वैजयन्तीकोशकारोऽपि गोनर्दीयं पतञ्जलिमेव मनुते—'गोनर्दीयः पतञ्जलिः ।, किन्तु डा० कीलहार्नस्य मतमस्ति यद गोनर्दीयं आचार्यो हि पतञ्जलेभिन्न एवास्ति । महाभाष्यकारो हि पतञ्जलिः काश्मीरदेशजो विद्यते । पुष्यमित्रं याजयामहे इत्युदाहरणात् पुष्यमित्रपुरोहितो ऽयमासीदित्यपि साधयन्ति समालोचकाः ।

देशोऽप्यस्य गोनर्दः स्वयमेव भाष्यकृता स्वम तमभिनिवेशेनोपन्यस्यता 'गोनर्दीयस्त्वाह' इत्युक्तम् । एतेन गोनर्दाभिजनो भाष्यकारः सिध्यति । गोनर्दश्चायमिदानीमयोध्यातः उत्तरवर्ति गोण्डा इति नाम्ना प्रसिद्धं मण्डलं वर्तते । यद्यपि पुष्यमित्रस्य राजधानी पाटलिपुत्रमासीत्तथापि अयोध्यायां तेनोपराज्यं स्थापितमासीत् । ततश्च गोण्डामण्डलमधिवसतः पतञ्जलेः सम्भवति अयोध्यावसता पुष्यमित्रेण सह सम्बन्धः । केचित्तु गोनर्द उज्जयिनी प्रान्ते मध्यदेशे मन्यन्ते । यस्य प्राकृतं नाम गोनद्दमित्यासीत् । परं काशिकादौ गोनर्दः प्राग्देशेषु गणितः, न दक्षिणदेशेषु' । अतः गोण्डा । एव गोनर्दो मन्तव्यः ।

स्वातन्त्र्येण सूत्राणि तु क्वचिदेव व्याख्यातानि महाभाष्ये । अन्यशास्त्रभाष्यापेक्षया व्याकरणभाष्ये इदमस्ति वैलक्षण्यम्-वेदान्तादिभाष्यस्य व्याख्यानभूतं वार्तिकं व्याकरणे तु वार्तिकव्याख्यानभूतं वार्तिकम् । अतो व्याकरणभाष्यं महाभाष्यमित्युच्यते । स्वतन्त्र्येष्ट्यादिमत्वं महत्वमिति गुरुचरणाः । भाष्यलक्षणञ्च—

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥**

यथा वृद्धिरादैच् इति सूत्रे वृद्धिपदेन सूत्रकृता पाणिनिना मङ्गलं कृतम् । 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र सिद्धपदेन वार्तिककृता मङ्गलं विहितं तथैव 'अथ शब्दानुशासनमित्यत्राथशब्देन भाष्यकृता मंगलमनुष्ठितम् ।

महाभाष्ये यद्यपि प्रधानतया कात्यायनीयवार्तिकानामुल्लेखो विद्यतेऽथापि तत्रान्येषामपि वार्तिककाराणां वार्तिकानि उद्धृतानि सन्ति । विष्णुधर्मोत्तरपुराणस्य तृतीये खण्डे चतुर्थाध्याये भाष्यस्य लक्षणं कृतमस्ति यत् यस्मिन् ग्रन्थे सूत्रार्थसूत्रानुसारिवाक्यवार्तिकस्वपदानां व्याख्यानं क्रियते स ग्रन्थो भाष्यनाम्ना व्यवह्रियते—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

महाभाष्यं हि पाणिनीयव्याकरणस्यात्यन्तं प्रमाणिकं ग्रन्थरत्नमस्ति। महामुनिना भगवता पतञ्जलिना पाणिनीयव्याकरणव्याख्यानव्याजेन महाभाष्ये समस्तानां ग्रन्यानां सारः संगृतोऽस्ति। महाभाष्यस्य सूक्ष्मपर्यालोचनया प्रतीयते यदयं ग्रन्थो न केवलं पाणिनीयव्याकरणस्यैव प्रामाणिको ग्रन्थोऽस्ति, अपितु इदं समस्तानां विद्यानामाकरग्रन्थोऽस्ति। अत एव भर्तृहरिणा वाक्यपदीये निर्धारितम्—

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायवीजानां महाभाष्ये निवन्धने॥

यद्यपि महाभाष्यं व्याकरणस्यैव मान्यो ग्रन्थो विद्यते तथापि अन्यव्याकरणवद् अयं शुष्क एकाङ्गी च नास्ति। अत्र व्याकरणसदृशस्य क्लिष्टस्य विषयस्यात्यन्तसरस-सरल-प्राञ्जलया सरण्या प्रतिपादनं कृतमस्ति। अस्य भाषा दीर्घपदसमासरहिता, लघुलघुतर वाक्यकदम्बक गुम्फिता, प्रश्नोत्तरसनाथा, सरला सरसा मञ्जुला चास्ति। लेखनशैलीदृष्ट्या ग्रन्थोऽयं संस्कृतवाङ्मयेऽद्भुतो वर्तते। न कोऽपि ग्रन्थः एतद्रचनाशैलीसमतां विधातुं समर्थोऽस्ति। शवरस्वामिना महाभाष्यस्यादर्शे स्वं मीमांसाभाष्यं लिखितुं प्रयतितं, परं तस्य भाषा नैतादृशी प्राञ्जला जाता, स्थले स्थले तद्भाषा प्रस्खलितभावा सती, न नैजं भावमभिव्यञ्जयितुं क्षमा। स्वामिशङ्कराचार्यकृतवेदान्तभाष्यभाषा यद्यपि प्राञ्जला, भावव्यञ्जनसमर्था, प्रसादगुणमुम्फिताऽस्ति तथापि महाभाष्यवत् सरला, सरसा, स्वाभाविकी च नास्ति। चरकसंहिताया गद्यभागभाषा महाभाष्यवत्सरला सरसा स्वाभाविकी प्राञ्जला वा सती अपि तद्विषयप्रतिपादनशैली महाभाष्यसदृशी अत्युत्कृष्टत्वं न विभर्ति। अतः सर्वदृष्ट्या महाभाष्यं संस्कृते वाङ्मये आदर्शभूतमस्ति।

एवं व्याकरणव्याख्यानव्याजेन महाभाष्ये पतञ्जलिना समस्तविद्यानां सारः संगृहीतः।

**ग्रन्थाः—**

पतञ्जलिकृता त्रयो ग्रन्थाः कथ्यन्ते (१) चकरसंहिता (२) योगदर्शनम् (३) महाभाष्यञ्च। अत एवोक्तम्—योगेन चितमित्यादि। केचन च चरकसंहितायोगदर्शने अन्यपतञ्जलिकृते स्त इति मन्यन्ते। समुद्रगुप्तेन कृष्णचरितप्रस्तावनायां पतञ्जलिविषये लिखति—

विद्ययोद्रिक्तगुणतया भूभावमरतां गतः।
पतञ्जलि र्मुनिवरो नमस्यो विदुषां सदा॥
कृतं येन व्याकरणे भाष्यं वचनशोधनम्।
धर्मा वियुक्ताश्चरके योगारोषमुषः कृताः॥

महानन्दमयं काव्यं योगदर्शनभद्भुतम् ।
योगव्याख्यानभूतं तद् रचितं चित्तशोधनम् ॥

चरकस्य चक्रपाणिटीकारम्भेऽपि

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽहम् ॥

## प्रासङ्गिकं दिग्दर्शनम्

पाणिनीयं हि व्याकरणं अखिलभारतीयं गौरवं बिभर्ति । मुनित्रयातिरिक्तैः यैः सकलशास्त्रनिष्णातैः व्याकरणधुरन्धरैः विचारशीलैः विद्वद्भिः स्वस्वकृतिद्वारा पाणिनीयव्याकरणमग्रे सारितम्, प्रयतितं चैतत्सम्मानं वर्द्धयितुम् । तेषामपि कियतां विपश्चितां परिचयः अत्यावश्यक इति मत्वा मया प्रसङ्गतः समासेन तत्परिचय-दिग्दर्शनं प्रस्तूयते ।

## भर्तृहरिः

संस्कृतव्याकरणस्य पर्यालोचनया ज्ञायते यत् पतञ्जलिमुनिकृतस्य महाभाष्य-स्यानेके व्याख्यातारो बभूवुः । तेषु भर्तृहरिरप्यन्यतमः । भर्तृहरिविरचिताया महाभाष्यस्य टीकाया यावानंश उपलभ्यते तदवलोकनेन स्पष्टं ज्ञायते यत् ततः पूर्वमपि महाभाष्ये अनेका व्याख्या जाता आसन् । अत एव तेन अन्ये-अपरे-केचित्-इत्यादिशब्दैः प्राचीन टीकाकाराणां मतमुपन्यस्तं विद्यते । महाभाष्यस्योपलब्धासु टीकासु भर्तृहरेः टीका अतिप्राचीना, प्रामणिकी च वर्तते । वैयाकरणनिकाये पतञ्जलेरनन्तरं योगिराजो भर्तृहरिरेव सर्वैः वैयाकरणैः प्रमाणभूतः आचार्यः स्वीक्रियते । भर्तृहरिणा च स्वकीयेषु ग्रन्थेषु न क्वचन आत्मनः परिचयो दत्तः । अतस्तद्विषयेऽस्माकं ज्ञानमत्यल्पकम्, किन्तु पुण्यराजेन भर्तृहरिगुरोर्नाम वसुरात इत्युक्तम् । **न तेनास्मद्गुरोस्तत्रभवतो वसुरातानन्य ( पृ० २८४ )**

अपि च–

आचार्यवसुरातेन न्यायमार्गान् विचिन्त्य सः ।
प्रणीतो विधिवच्चायं मम व्याकरणागमः ॥

**'यस्त्वयं विदविदामलङ्कारभूतो वेदाङ्गत्वात् प्रमाणितशब्दशास्त्रः सर्वज्ञमन्य उपमीयते तेन कथमेतत् प्रयुक्तम्'**

वाक्यपदीय–महाभाष्ययोः पर्यालचनया ज्ञायते यद् भर्तृहरिः वैदिकधर्मावलम्बी विद्वानासीत्, अयमागमशास्त्रञ्च सर्वोपरि प्रमाणं मनुते, तथा चोक्तं तेन वाक्यपदीये ब्रह्मकाण्डे–

**नचागमादृते धर्मस्तर्केण व्यवतिष्ठते । = ४६**

अपि च—

**वेदशास्त्र विरोधी च तर्कश्चक्षुरपश्यताम् । =१३६**

जैनविद्वान् वर्धमानसूरिः गणरत्नमहौदधौ लिखति-एतेनेति । यत्तु चीनी यात्रिणा इत्सिङ्गेन स्वकीयभारतयात्राविवरणे लिखितं यत् भर्तृहरिः बौद्धधर्मानुयायी विद्वान् आसीत् तेन सप्तवारं प्रवज्याग्रहणं कृतम् तदनर्गलं प्रलपितमेव, नहि वेदविरोधी बौद्धविद्वान् आगमविहितं धर्मं विशुद्धं मन्तुं शक्नुयात् । भारतीयजनश्रुतेरनुसारं भर्तृहरिः महाराजविक्रमादित्यस्य सहोदरभ्राता आसीत् । केचित्तु इत्सिगलेखानुसारं भर्तृहरेः समयः सप्तमशताब्दीं मन्यन्ते । ४ । ३ । ८८ सूत्र काशिकायां वाक्यपदीयस्योल्लेखोऽस्ति, तेन काशिका निर्माणात् पूर्वं वाक्यपदीयनिर्माणं जातमिति प्रतीयते । काशिकानिर्माणञ्च सं. ६८०-७०१ मध्ये जातम् । वामनेन काशिकायां दुर्गवृत्तेः खण्डनं कृतं कातन्त्रव्याकरणदुर्गवृत्तौ वाक्यपदीयस्य श्लोक उद्धतोऽस्ति । अतो भर्तृहरिः सप्तमीशताब्दीतो वहुपूर्ववर्ती सिद्धो भवति । किञ्च कुमारिलभट्टेनापि तन्त्रवार्तिके वाक्यपदीयस्य पद्यमुद्धृतमस्ति ।

भर्तृहरिणा अनेके ग्रन्था रचिताः सन्ति। तेषु ( १ ) महाभाष्यदीपिका ( २ ) वाक्यपदीयम् ( ३ ) वेदान्तसूत्रवृत्तिः ( ४ ) मीमांसासूत्रवृत्तिः ( ५ ) नीति-वैराग्य-शृंगार शतकञ्च। भर्तृहरिकृतभाष्यदीपिकाया अवलोकनेन ज्ञायते यत् भर्तृहरिः मीमांसाया महान् विद्वानासीत् । काशीसमीपवर्तिनि विक्रमादित्यकृते चुनारदुर्गे भर्तृहरेरेका गुफा विद्यते विक्रमराजधान्यामुज्जयिन्यामपि भर्तृहरिगुफा प्रसिद्धास्ति । एतेन विक्रमादित्यभर्तृहर्योः पारस्परिककल्पना समीचीनैव । भर्तृहरिणा महाभाष्यस्यैका विस्तृता भावपूर्णा च व्याख्या विहिता या महाभाष्य-दीपिकेति नाम्ना प्रसिद्धास्ति, परं साम्प्रतं सा सम्पूर्णा नोपलभ्यते । कैयट-वर्धमान-शिवरामेन्द्रसरस्वती-नागेश-वैद्यनाथपायगुण्डेप्रभृतीनां ग्रन्थेषु भाष्यदीपिकाया उद्धरणं प्राप्यते । श्रूयते जर्मनवर्लिनपुस्तकालये भाष्यदीपिकाया हस्तलेखः सुरक्षितोऽस्ति, यस्य चित्रं पञ्जावविश्वविद्यालयपुस्तकालये मद्रासविश्वविद्यालय-पुस्तकालये च समागतमस्ति । इदमपि श्रूयते यद् वलभीनरेशस्य श्रीधरसेनस्या-नुरोधेन भर्तृहरिः काशिकायां भागवृत्तिनाम्नी टीकापि लिखिता । कवीन्द्राचार्येत्र भागवृत्ति प्रशंसा लिखिता ।

वस्तुतो भर्तृहरिसमोऽशेषतत्त्वनिष्णातो वैयाकरणो नितान्तं दुर्लभः । पतञ्जलिना महाभाष्ये व्याकरणस्य यद् दार्शनिकपक्षरहस्यं समुद्घाटितं तत्प्रेरणया स्फूर्तिमवाप्य भर्तृहरिणा अलौकिकपाण्डित्यमण्डितं दार्शनिकविवेचकं वाक्यपदीयं विरचितम् । वाक्यपदीयं काण्डत्रये विभक्तमस्ति-तत्राद्यं **ब्रह्मकाण्डम्** द्वितीयं

**वाक्यकाडं** तृतीयं च **पदकाण्डम्।** प्रथमकाण्डे-व्याकरणसंमतमूलतथ्यशब्द-ब्रह्मणो विमर्शः कृतोऽस्ति, तस्याद्यं पद्यम्।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

अत्र वेदस्वरूपप्रतिपादनमपि संक्षेपतो विद्यते। फलतः काण्डमिदम् आगम-काण्डमपि कथ्यते–

द्वितीये वाक्यविषया विचारिताः सन्ति। तृतीये च पदकाण्डे पदानाम-भिधानं कृतमस्ति।

तथाचोक्तम्—

द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधापि वा।
अपोद्घृत्यैव वाक्येभ्यः प्रकृति-प्रत्ययादिकम्॥

## कैयटः

कैयटेन पतञ्जलिमुनिना प्रणीते महाभाष्ये प्रदीपनाम्नी एका महत्वपूर्णा टीका लिखितास्ति। महाभाष्यस्योपलब्धासु टीकासु इयमेव टीका सर्वातिशायिनी विद्वत्समादृता चास्ति। कैयटकृतस्य महाभाष्यप्रदीपस्य प्रत्यध्यायसमाप्तौ या पुष्पिका उपलभ्यते, तया ज्ञायते यत् कैयटस्य पितुर्नाम जैयट उपाध्याय इत्यासीत्। यथा–इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे इत्यादि।

उद्योतकरस्य उद्धरणं चन्द्रसागरसूरिणा हैमवृहद्वृत्तौ आनन्दवोधिनीटीकाया-मुद्धृतमस्ति। उद्योतकरः कैयटस्य शिष्य आसीत्, उद्योतकरोऽयं न्यायवार्तिक-निर्मातुरुद्योतकराद्भिन्नः प्रतीयते। कैयटेन आनन्दवर्द्धनाचार्यकृतस्य देवीशतकस्य टीका कृतास्ति तत्र कैयटस्य पितुर्नाम चन्द्रादित्य इत्यस्ति निर्दिष्टम्। अतोऽयं कैयटः प्रदीपकर्तुः कैयटाद्भिन्नः प्रतीयते। यद्यपि कैयटः स्वजन्मना कतमं देशमलङ्कृत-वानिति स्पष्टं न प्रतीयते, अथापि मम्मटः रुद्रटः उद्भटेत्यादि नाम सादृश्यात् कैयटोऽपि काश्मीर वास्तव्य इत्यनुमीयते। श्रूयते-एकदा कैयटः पाजामानाम-कमधोवस्त्रं परिधाय काश्याः पण्डितसभायामुपस्थितः, परं न केनापि तस्मिन् ध्यानं प्रदत्तम्, परन्तु तत्र प्रस्तुते शास्त्रीयतत्त्वविशेषे यदा कैयटेन साधु समा-धानं कृतं तदा पण्डितमण्डली चकिता जाता। तस्य महत्सम्मानमजायत अतोऽपि कैयटः काश्मीरवासी प्रतीयते।

१।२।६४ सूत्रमहाभाष्यवाक्यस्य **'वृक्षस्थोऽवतानो वृक्षे च्छिन्नेऽपि न नश्यति'** इत्यस्य व्याख्याने कैयटो लिखति यत् **'यथा वृक्षोपरि द्राक्षादिलता'।** अनेन दृष्टान्तेनापि कैयटः काश्मीरदेशजः प्रतीयते। मैत्रेयरक्षितः तन्त्रप्रदीपे एवं कैयटं स्मरति-कैयटस्तु कार्तिकयाः प्रभृतीति भाष्यकारवचनात् एवंविधविषये

पञ्चमीभवतीति मन्यते । अतः कैयटस्य समय एकादशशताब्द्या उत्तरार्द्धं निश्चितः विद्वद्भिः । कैयटो भर्तृहरिकृतवाक्यपदीयमाश्रित्य भाष्यप्रदीपं रचितवान् तथा चोक्तम् तेन स्वयमेव **'तथापि हरिवद्धेन सारेण ग्रन्थसेतुना ।'**

प्रदीपपर्यालोचनया कैयटस्य प्रौढं पाण्डित्यं प्रतीयते । साम्प्रतं महाभाष्य-ग्रन्थिभेदनसमर्थो भाष्यप्रदीप एवास्ति । एनमन्तरा महाभाष्यार्थः सम्यग्ज्ञातुं न शक्यते । अतो वैयाकरणनिकाये कैयटकृतभाष्यप्रदीपस्य महत्वपूर्णं स्थानमस्ति, यदि कैयटकृतं व्याख्यानं नाभविष्यत् तर्हि अस्मादृशां कृते महादुर्बोधमेवाभविष्य-न्महाभाष्यम् । यदा महाभाष्यस्य विषमपङ्क्तीनां रहस्यं नावगतं तदा पण्डितैः तच्चतुर्दिक्षु गोलाकराः कुण्डलनाः कृताः ताश्च शताब्दीपर्यन्तं तथैव स्थिताः । तासां रहस्यं तदा समुद्घाटितं यदा कैयटेन महाभाष्ये प्रदीपाख्यां व्याख्यां विधाय तद्दुर्बोधता ध्वस्तीकृता । तदानीं महाभाष्याध्ययनदुर्दशां व्यञ्जयता श्रीहर्षेण स्वकीये नैषधीयचरिते महाभाष्ये कुण्डलनाविधानमेव चार्चितमस्ति—

**फणिभाषितभाष्यफक्किका विषमा काण्डनामवापिता ।**

एवं कैयटसमो महाभाष्यस्य मर्मवेत्ता नान्यो वैयाकरणः प्रतीयते । महा-भाष्यप्रदीपो नितान्तप्रौढो ग्रन्थः । एतत्साहाय्यमन्तरा महाभाष्यस्य वास्तविकं रहस्यं स्फुटीकर्तुमशक्यमस्ति । काश्मीरीय वैयाकरणविदुषां वैदुष्यं प्रदीपमाध्य-मेनास्माकं समक्षे प्रतिफलितमस्ति । कैयटात् पूर्वं यैराचार्यैः महाभाष्यं व्याख्यातं तत्सर्वं संगृह्य कैयटेन नैजः प्रदीपः प्रदर्शितः । श्रूयते कैयटात्पूर्वं भाष्ये स्थले स्थले कुण्डलाना कृतासीत्, परं कैयटः स्वप्रौढपाण्डित्येन तत्र तत्र भाष्यं संयोज्य कुण्डलना दूरीकृता । महाभाष्यप्रदीपस्य महत्त्वादेव अनेके वैयाकरणा अत्र व्याख्यां कर्तुं प्रवृत्ताः । तेषु नागेशभट्टः प्रमुखः । अनेन महाभाष्यप्रदीपे उद्योत-नाम्नी व्याख्या कृता, या विवरणेति नाम्ना प्रसिद्धास्ति वैयाकरणनिकाये ।

## नागेशः

नागेशभट्टो व्याकरण-साहित्य-धर्मशास्त्र-अलंकार-सांख्य-योग पूर्वोत्तरभीमांसा ज्योतिषप्रभृतिशास्त्राणां प्रकाण्डः पण्डित आसीत् । वैयाकरणनिकाये भर्तृहरेः पश्चात् नागेशभट्ट एवैकः प्रामाणिको विद्वान् विवेचकश्च प्रसिद्ध आसीत् । वर्तमानेषु वैयाकरणेषु नागेशभट्टविरचिता महाभाष्यप्रदीपोद्योत—लघुशब्देन्दुशेखर-परिभाषेन्दुशेखरग्रन्था अतिप्रसिद्धाः प्रामाणिकाश्च सन्ति । तेन महाभाष्यप्रदी-पोद्योते लघुमञ्जूषा-शब्देन्दुशेखरौ उद्धृतौ स्तः, तौ च पुत्री-पुत्रौ चाभिमतौ—

शब्देन्दुशेखरः पुत्रः मञ्जूषा चैषकन्यका ।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥

नागेशेन निम्नाङ्किता अष्टौ ग्रन्था विरचिताः—

( १ ) लघुशब्देन्दुशेखरः, ( २ ) बृहच्छब्देन्दुशेखरः, ( ३ ) परिभाषेन्दुशेखरः, ( ४ ) स्फोटवादः, ( ५ ) लघुमञ्जूषा, ( ६ ) परमलघुमञ्जूषा, ( ७ ) महाभाष्यप्रदीपोद्योतः, ( ८ ) महाभाष्यप्रत्याख्यानसंग्रहः, ( ९ ) दुर्गासप्तशती टीका ( नागेजोभट्टी )

नागेश भट्टेन व्याकरणातिरिक्ता धर्मशास्त्र-दर्शन-ज्योतिष-अलङ्कारादिविषयका अपि ग्रन्थाः प्रणीता आसन्। भानुदत्तकृतरसमञ्जरीग्रन्थेऽपि नागेशभट्टस्यैका टीका विद्यते यस्य हस्तलेखः लन्दनस्थे इण्डिया कार्यालयपुस्तकालये सुरक्षितोऽस्ति। तस्य लेखकालः १९६९ वि० ग्रन्थाङ्कश्च १२२२ वर्तते।

एवं नागेशेन सिद्धान्तकौमुद्या द्वे एव व्याख्ये लिखिते ( १ ) लघुशब्देन्दुशेखरः ( २ ) बृहच्छब्देन्दु शेखरश्च। नगेशेन प्रदीपोद्योतद्वारा महाभाष्यस्य, लघुशब्देन्दुशेखरद्वारा प्रौढमनोरमायाश्च गभीरं रहस्यं व्यक्तीकृतम्। परिभाषेन्दुद्वारा च परिभाषाणां स्वरूपमनुशीलितम्।

तत्र भवान् वैयाकरणकुलशिरोमणिः नागेशभट्टः स्वजन्मना कतमं देशमलञ्चकारेति न ज्ञायते। अथापि अयं महाराष्ट्रियो ब्राह्मण आसीदित्यत्र नास्ति कश्चित् सन्देहः। एतस्यापरं नाम नागोजीभट्टोऽप्यासीत्। अस्य जनकः शिवभट्टः जननी च सती देवी आसीत्। तदुक्तं शब्देन्दुशेखरे—शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः। वैयाकरणसिद्धान्तकौमुदीकर्तुः भट्टोजिदीक्षितस्य प्रपौत्रः हरिदीक्षितः, अस्य गुरुः प्रथमशिष्यश्च वैद्यनाथपायगुण्डे अभवत्।

येन महाभाष्यप्रदीपोद्योतस्य छाया नाम्नी व्याख्या लिखिता। छाया चेयं केवलं नवाह्निके महाभाष्ये एवोपलभ्यते। वैद्यनाथपुत्रो नागेशशिष्यो बाल शर्मा च १८४०-१८७२ मध्ये भारते वर्तमानस्य कोलब्रुकस्यानुरोधेन धर्मशास्त्रसङ्ग्रहनामकं ग्रन्थं विरचितवान्, यस्य हस्तलेखः लन्दनस्य भारतकार्यालयपुस्तकालये सुरक्षितो विद्यते। तत्क्रमाङ्कश्च १५०७ अस्ति।

अस्य कापि सन्ततिर्न वभूव एतदपि लघुशब्देन्दुशेखरान्तिमश्लोकात्स्पष्टीभवति। नागेशः व्याकरण-अलंकार-धर्मशास्त्र-दर्शनशास्त्र-ज्योतिषादीनां विषयाणां प्रकाण्डः पण्डित आसीत्। श्रूयते नागेशेन अष्टादशवारं गुरुमुखात् महाभाष्यस्याध्ययनं कृतम्। मञ्जूषा शेखर-निर्माणान्तरमेतेन महाभायप्रदीपोद्योतो लिखितः। तथा चोक्तं प्रदीपोद्योते—अधिकं मञ्जूषायां द्रष्टव्यम् (४।३।१०१) लघुशब्देन्दुशेखरे निरूपितमस्माभिः ( २।१।२२ ) अयं प्रयागपार्श्ववर्तिन शृङ्गवेरपुराधिपते रामसिंहस्य सभापण्डित आसीत्। तत एवास्य भरणपोषणादिकं भवतिस्म। तथाचोक्तं तेन स्वयमेव शब्देन्दुशेखरस्य आरम्भे—

शृङ्गवेरपुराधीशाद् रामतो लब्धजीवकः।

नागेशः कदा भारतभूमिं स्वस्थित्या सुशोभितवानिति जिज्ञासायां जागृतायामेतदेववक्तुमलं यदयं पण्डितराजेन जगन्नाथेन विरचितस्य रसगङ्गाधरस्य गुरुमर्मप्रकाशनाम्नीं टीकां कृतवान्, पण्डितराजस्तु दिल्लीश्वरस्य मुगलसम्राजः शाहजंहाधिपतेः सभायां स्वविद्याचमत्कारप्रदर्शनेन पण्डितराजेति पदवीमवाप्तवान्। शाहजहां सम्राजो राज्यकालस्तु १६२८ तः १६५८ पर्यन्तं स्वीकुर्वन्तीतिहासविदः। अतः तदन्तरमेव नागेशस्य सत्ता सम्भवति।

किञ्च १७१४ ईशवीये वर्षे जयपुराधीशः सवाईजयसिंहोऽश्वमेधयागप्रसंगे नागेशं सादरमामन्त्रयां बभूव, किन्तु अहं क्षेत्रसन्यासं गृहीत्वा काश्यां तिष्ठामि। अतः काशीं परित्यज्यान्यत्र गन्तुं न शक्नोमीत्युक्त्वा नागेशेन तदामन्त्रणं नाङ्गीकृतम्। तस्मात् नागेशस्य समयः अष्टादश शताब्दीप्रारभ एव निश्चीयते।

जातयज्ञोपवीतादिसंस्कारो नागेशः षोडशवर्षपर्यन्तं काश्यामितस्ततोऽध्ययनार्थं परिभ्रममाण एकदा पण्डितसभामेकामुपस्थाय सहसा प्रधानासनमधिष्ठितः। अतस्तत्रत्यैः पण्डितै र्वाग्वाणै र्भर्त्सयद्भिः सार्द्धचन्द्रं स ततो निष्कासितः। तेन अपमानेन परमं दुःखमावप्यासौ सर्वोत्कृष्टां विद्यामभिगम्याहमपि अल्पीयसा समयेन सर्वान् जेष्यामीति प्रतिज्ञाय व्यक्ताहारः वागीश्वरीं देवीं समाराधयन्। कतिपयैरेव दिवसैः वागीश्वरीकृपातः स निखिलशास्त्रतत्त्वमधिगतवानिति श्रूयते।

यद्यप्यसौ वागीश्वरीकृपात एव सकलशास्त्ररहस्यं ज्ञातवान् तथापि गुरुसम्प्रदायप्राप्तैव विद्या श्रेष्ठा सम्भवतीत्यनुसन्धाय पण्डितप्रकाण्डात् भट्टोजिदीक्षितस्य प्रपौत्रात् हरिदीक्षिताद् व्याकरणमधीत्य पण्डितमण्डलीमूर्धन्यतामवाप्तवान्।

## वामन-जयादित्यौ

जयादित्यवामनविरचिता सम्मिलिता वृत्तिः काशिकानाम्ना प्रसिद्धास्ति। साम्प्रतं समुपलभ्यमानपाणिनीयव्याकरणग्रन्थेषु महाभाष्य-वाक्यपदीयानन्तरमियं काशिकावृत्तिरेव सर्वप्राचीना महत्त्वपूर्णा चास्ति। अत्र वहूनां सूत्राणां वृत्तय उदाहरणानि च पूर्ववृत्तिभ्यः संगृहीतानि सन्ति। अतः पाणिनीयव्याकरणे काशिकाया महन्महत्वं वरीवर्ति। काशयति प्रकाशयति सूत्रार्थमिति व्युत्पत्या निष्पन्नः काशिकाशब्दः। वालशास्त्रिसम्पादितायां काशिकायामाद्यानां चतुर्णां मध्यायानामन्ते जयादित्यस्य, शेषाणाञ्च चतुर्णामध्यायानामन्ते वामनस्य च नामाङ्कितमस्ति। हरिदीक्षितेन प्रौढमनोरमायाः शब्दरत्नव्याख्यायां प्रथम-द्वितीय-पञ्चम-षष्ठा अध्याया जयादित्यकृता शेषा वामनेन विरचिताः स्वीकृताः। प्राचीनैराचार्यैस्तु काशिकाया उद्धरणानामाधारेण आदितः पञ्च अध्याया जयादित्यविरचिताः, अन्तिमा त्रयोऽध्याया वामनकृताः सन्तीति मन्यन्ते। वस्तुतः काशिकालेखनशैलीपर्यवेक्षणेन इदमेव निश्चीयते यदाद्या पञ्चाध्याया जयादित्यकृता अन्त्याश्च त्रयो वामनकृताः सन्ति। जयादित्यापेक्षया वामनस्य लेखोऽति-

प्रौढः परिस्कृतश्चास्ति। चीनीयात्रिणा इत्सिङ्गेन स्वभारतयात्रावर्णने जयादित्य-मात्रमेव काशिकाया रचयिता लिखितोऽस्ति, न तेन वामनस्य निर्देशः कृतोऽस्ति। संस्कृते वाङ्मयेऽनेके ग्रन्था द्वाभ्यां लिखिताः, किन्तु तदुद्धरणकर्तार एकस्यैव नाम यदा कदाचित् लिखन्ति।

अनेकेषां विदुषां मतमस्ति यत् माघकविरचितशिशुपालवधमहाकाव्यस्य—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविधेव नो भाति राजनीतिरपस्पशा ॥=२।११२

इति श्लोके सद्वृत्तिपदेन काशिकायाः संकेतः, न्यासपदेन च जिनेन्द्रबुद्धिविरचितस्य न्यासस्य च संकेतोऽस्ति। काशिकावृत्तिरचना काश्यामेवाभवत्, तथा चोक्तं हरदत्तेन पदमञ्जर्याम्। काशिकाव्याख्यायां 'काशिका देशतोऽभिधानं काशीषु भवा'। उणादिवृत्तौ उज्ज्वलदत्तोऽप्यमुमर्थं समर्थयते। काशिकापूर्ववर्तिनीषु वृत्तिषु गणपाठो नासीत्, परं काशिकायां यथास्थानं गणपाठः सन्निवेशितः। वामनजयादित्याभ्यां प्राचीनवृत्यनुसारेणैव काशिकायां सूत्राणां व्याख्या कृतास्ति, यया सूत्रार्थज्ञाने पर्याप्तं साहाय्यमुपलभ्यते। काशिकाया उदाहरण-प्रत्युदाहरणे च प्रायः प्राचीनवृत्यनुसारं स्तः, याभ्यां प्राचीनानामैतिहासिकतथ्यानां ज्ञानमुपजायते। एवं सत्यपि काशिकवृत्तौ अनेकस्थलेषु महाभाष्याद्विरोधो दृश्यते। अत एव वैयाकरणनिकाये तत्र भागवृत्ति-सिद्धान्तकौमुदीसदृशः समादरो नास्ति।

पाणिनीयव्याकरणस्य व्याख्यायुगः प्रधानतया पञ्चमशताब्दीतः चतुर्दशशताब्दीपर्यन्तं व्याप्तमस्ति। इतः पूर्वं पाणिनेरष्टाध्याय्याः कात्यायनद्वारा वार्तिकानां पतञ्जलिद्वारा महाभाष्य च प्रणयनं जातमासीत्, तदनन्तरमेव व्याख्याग्रन्थनिर्माणं कृत्वा तदध्ययनाध्यापनप्रयासस्य सुलभीकरणमजायत।

अष्टाध्याय्यपेक्षया पातञ्जलं महाभाष्यमतिगभीरं दुरुहतरञ्चानुभूय व्याख्यातारः तद् व्याख्याकरणे प्रवृत्ताः। काशिकाकारेण स्वोपजीव्यग्रन्थान् निर्दिश्य तन्निर्माणकारणं प्रदर्शितं—

वृत्तौ भाष्ये तथा धातुनामपारायणादिषु।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥ =१ ॥

काशिकायामनेकेषां सूत्राणां वारद्वयं व्याख्यां विधाय द्विप्रकारिकां शब्दसिद्धिं प्रदर्श्य तत्राचार्यमेव प्रमाणं मनुते—**सुत्रार्थद्वयमेव चैतदाचार्येण शिष्याः प्रतिपादिताः। तदुभयमपि ग्राह्यम्।** तथाचायं निष्कर्षो यद् भगवता पाणिनिनैव स्वयं सूत्राणां प्रवचनं विधाय तत्तात्पर्यादिभिःशिष्याः समवबोधिताः। काशिकाया उदाहरण-प्रत्युदाहरणैः प्राचीनमैतिहासिकं महत्वं प्रस्फुटी भवति। वामनेन काशिकाया अन्ते तद्वैशिष्ट्यं सम्यक् प्रतिपादितं, यस्य निर्देशो न्यासकारेणैव कृतोऽस्ति—

इष्ट्युपसंख्यानवृती शुद्धगुणा विवृत्तगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धि र्वृत्तिरियं काशिका नाम ॥

काशिकाया गूढार्थं सुबोधं विधातुं द्वाभ्यां विद्वद्भ्यां तत्र पाण्डित्यपूर्णे द्वे व्याख्ये लिखिते स्तः। तत्र जिनेन्द्रबुद्धिना काशिकाविवरणपञ्जिका लिखिता, यस्याः प्रख्यातं नाम न्यासोऽस्ति। हरदत्तस्य व्याख्याया नाम पदमञ्जरी। हरदत्तेन पदमञ्जर्यां प्रदीपस्य विशिष्टसामग्र्या उपयोगः कृतः।

**हरदत्तः**

हरदत्तमिश्रेण काशिकायाः पदमञ्जरी नाम्नी व्याख्या लिखितास्ति। पदमञ्जरीपर्यालोचनेन हरदत्तस्य प्रौढं पाण्डित्यं तद्वैशिष्ट्यञ्च प्रतिभाति। हरदत्तो न केवलं वैयाकरण एवासीत्, किन्तु तेन योगसूत्र-गृह्यसूत्र-धर्मशास्त्रादीनाञ्च प्रामाणिकी व्याख्या कृतास्ति। पण्डितराज इव हरदत्तोऽप्यात्मनः प्रशंसातो न विरमति। तदुक्तं तेन-पदमञ्जर्याः प्रथमे भागे–**'प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः हरदत्तहरिः स्वैरं विहरन् केन वार्यते**? हरदत्तस्य पिता पद्मकुमारः, माता श्रीः, ज्येष्ठभ्राता अग्निकुमारः, गुरुश्चापराजित आसीत्। तेनैवात्मनः परिचये स्वयमेव व्यलेखि––

तातं पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा।
ज्येष्ठं चग्निकुमाराख्यमाचार्यमपराजितम् ॥

हरदत्तो हि शैवमतावलम्बी द्रविणब्राह्मण आसीत्। तेन पदमञ्जरीप्रथमश्लोकेन साम्वं सदाशिवं प्रणमति–

तस्मै शिवाय परमाय दशाव्ययाय।
साम्वाय सादरमयं विहितः प्रणामः ॥

पदमञ्जर्या अवलोकनेन प्रतीयते यद् हरदत्तो दक्षिणदेशवासी आसीत्––

**'यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः।'**

हरदत्तः स्वकीयेषु ग्रन्थेषु नैवंविधायाः कस्याश्चिद्घटनाया उल्लेखः कृतोऽस्ति, यया तस्य समयनिर्णये निश्चितं ज्ञानं संभवेत्। अथापि अनेकेषां ग्रन्थकाराणां पौर्वापर्यपर्यालोचनेन द्वादश शताब्दी तस्य कालो निर्णीयते।

पदमञ्जरीपर्यालोचनया प्रतीयते यद् हरदत्तो महापदमञ्जरीनामकं द्वितीयम्, तृतीयं च परिभाषाप्रकरणाख्यं कञ्चन ग्रन्थं लिखितवान् आसीत्। तेनैव पदमञ्जर्यां १।१।२ सूत्रे लिखितमस्ति यच्चोलदेशनिवासिना रंगनाथयज्वना च पदमञ्जर्याः मञ्जरीमकरन्दनाम्नी महती टीका लिखितास्ति तदारम्भे एव तेनात्मनः परिचयः एवं दत्तोऽस्ति––

यो नारायणदीक्षितस्य नप्ता नल्लादीक्षितसूरिणस्तु पौत्रः।
श्रीनारायणदीक्षितेन्द्रपुत्रो व्याख्याभ्येष रङ्गनाथयज्वा ॥

**भट्टोजिदीक्षितः**

भट्टोजिदीक्षितस्य व्याकरणशास्त्रवैदुष्यं नितान्तं स्पृहणीयमादरणीयं लोकोपयोगि चास्ति। भट्टोजिदीक्षितो हि आन्ध्रप्रदेशनिवासी महाराष्ट्रियो ब्राह्मण आसीत्। अस्य पितुर्नाम लक्ष्मीधरभट्टः लघुभ्रातुर्नाम च रङ्गोजिभट्टः आसीत्। पुत्रस्य नाम भानुजीदीक्षितः भ्रातुष्पुत्रः कौण्डभट्टः पौत्रस्य नाम हरिदीक्षितः। नृसिंहपुत्रशेषकृष्णः गुरोर्नाम। स्वयं भट्टोजिदीक्षितेन शब्दकौस्तुभे शेषकृष्णं स्वगुरुं स्वीकरोति पण्डितराजो जगन्नाथोऽपि शेषकृष्णात् चिरकालं भट्टोजिदीक्षितस्याध्ययनं स्वीकरोति। अनेन व्याकरणं धर्मशास्त्रं च शेषकृष्णात्, वेदान्तं नृसिंहाश्रमात्, मीमांसा चाप्यदीक्षितात् अधीता। अनेन कौमुदीप्रणयनात्पूर्वं वेदान्ते धर्मशास्त्रे चानेके ग्रन्थाः लिखिताः आसन्।

**कालः—**

केचन समालोचका भट्टोजिदीक्षितस्य समयं सं० १६४७-१७०७ स्वीकरोति। अन्ये ऐतिहासिकाः १६३७ संवत्सरं मनुते। शेषकृष्णविरचितप्रक्रियाकौमुदी व्याख्याया एको हस्तलेखः भाण्डरकर ओरियण्टल रिसर्च इनस्टूयट् पूनासंग्रहालये सुरक्षितोऽस्ति। अतो भट्टोजिदीक्षितस्य समयः षोडशशताब्दी एव निश्चीयते।

भट्टोजिदीक्षितेन त्रयो ग्रन्था निर्मितः ( १ ) शब्दकौस्तुभः ( २ ) सिद्धान्तकौमुदी ( ३ ) प्रौढमनोरमा च। प्रथमं शब्दकौस्तुभस्य निर्माणं, ततः सिद्धान्तकौमुद्याः तदनन्तरं च प्रौढमनोरमाया, प्रणयनं जातम्। शब्दकौस्तुभः अष्टाध्याय्यानुसारं पाणिनीयसूत्राणां विस्तृता व्याख्याऽस्ति। साम्प्रतं सम्पूर्णो नोपलभ्यते केवलमादितः तृतीयाध्यायस्य द्वितीयपादं यावदुपलभ्यते। शब्दकौस्तुभस्य प्रथमाध्याये प्रथमे पादे पतञ्जलि-कैयट-हरदत्तानां सिद्धान्ताः विस्तारेण प्रतिपादिताः सन्ति। अतो लोपः ( ६।४।४८ ) सूत्रस्य प्रौढमनोरमायां स्वयमेव भट्टोजिदीक्षितेन लिखितमस्ति यद् विस्तरः शब्दकौस्तुभे बोध्यः, तथैव शब्दरत्ने च कौस्तुभे।

अनेकै विद्वद्भिः भट्टोजिदीक्षितकृतायाः प्रौढमनोरमायाः खण्डने ग्रन्था लिखिताः। तत्र शेषवीरेश्वरेण प्रौढमनोरमाखण्डनम्, चक्रपाणिदत्तेन च परमतखण्डनं लिखितम् पण्डितराजेन जगन्नाथेन प्रौढमनोरमायाः कुचमर्दिनीनाम्नी टीका कृता, यत्र स्थले-स्थले प्रौढमनोरमायाः खण्डनात्मकं कुचमर्दनं कृतम्। भट्टोजिदीक्षितेनापि शब्दकौस्तुभे प्रौढमनोरमायाञ्च स्वगुरुशेषकृष्णकृतप्रक्रियाप्रकाशस्य बहु खण्डनं कृतमत एवैनं पण्डितराजो गुरुद्रुहशब्देन स्तरति–**स्यति सर्वं गुरुद्रुहाम्**। भट्टोजिदीक्षितेन पाणिनीय व्याकरस्य अष्टाध्याय्याः प्रक्रियानुसारिणी, अत्युपयोगिनी व्याख्या कृता, या सिद्धान्तकौमुदीनाम्ना प्रसिद्धास्ति। एतन्निर्माणात् पूर्वं धर्मकीर्तिना कृते रूपावतारे, विमलसरस्वतीकृतरूपमालायां, रामचन्द्रस्य

प्रक्रियाकौमुद्यादिषु अष्टाध्यायीसमस्तसूत्राणां सन्निवेशो नासीत्। एतन्न्यूनता परिहाराय भट्टोजिदीक्षितेन सिद्धान्तकौमुद्या रचना कृता। साम्प्रतं समस्ते भारते पाणिनीयव्याकरणस्याध्ययनाध्यापनादिकं सिद्धान्तकौमुद्या आधारेणैव प्रचलति। भट्टोजिदीक्षितेन स्वयं सिद्धान्तकौमुद्या व्याख्या कृता, या प्रौढमनोरमेति नाम्ना प्रसिद्धास्ति। अत्र तेन प्रक्रिया कौमुद्यादीनां स्थाने स्थाने खण्डनं कृतम्। भट्टोजिदीक्षितेन **'यथोत्तरं मुनीनां प्रामाण्यम्'** इत्यत्र महद्बलं प्रदत्तमस्ति। अन्ये ग्रन्थकाराः पूर्ववर्तिनां ग्रन्थानामनुकरणं कुर्वन्ति, परं भट्टोजिदीक्षितेन सिद्धान्तकौमुदीं विलिख्य प्रक्रियाकौमुद्या उच्छेद एव कृतः। अत इदानीं सर्वत्र सिद्धान्तकौमुद्या एव प्रचलनं दृष्टिगोचरी भवति। भट्टोजिदीक्षितकृतायां प्रौढमनोरमायां तत्पौत्रेण हरिदीक्षितेन बृहच्छब्दरत्न-लघुशब्दरत्नेति नाम्नी द्वे व्याख्ये कृते स्तः। तत्र लघुशब्दरत्नं मुद्रितं सर्वत्र प्राप्यते परं बृहच्छब्दरत्नमिदानीं यावदमुद्रितमेवास्ति। कियन्तो मन्यन्ते यन्नागेशभट्ट एव शब्दरत्नं विलिख्य स्वगुरोर्नाम्ना प्रकाशितवान्। ज्ञानेन्द्रसरस्वतीमहाशयेन सिद्धान्तकौमुद्या या व्याख्या कृता, सा तत्त्ववोधिनीति नाम्ना प्रसिद्धास्ति, यस्या मनोरमाया एव संक्षेपः कृतोऽस्ति। **धर्मशास्त्रविषये**-अशौच-प्रकरणम्, तिथिनिर्णयः त्रिस्थलीसेतुः **वेदान्ते** तत्वकौस्तुभः, वेदान्ततत्त्वविवेकश्च, **पाञ्चरात्रप्रामाण्ये** च तन्त्राधिकारनिर्णय इत्यदयो दीक्षितस्य सन्ति ग्रन्थाः भट्टोजिदीक्षितो महान् शैव आसीत्। स्वां सिद्धान्तकौमुदीं निर्माय शिवाशिवयोः प्रसन्नतायै सा समर्पिता तेन। तथाहि सिद्धान्तकौमुद्यामन्ते––

> इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
> विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥
> भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी।
> प्रीत्यै भूयाद्भगवतो भवानीविश्वनाथयोः ॥

## रामचन्द्राचार्यः

पाणिनेरष्टाध्याय्यां माहेश्वरसूत्रैः सह पञ्चन्यूनानिचतुःसहस्राणि सूत्राणि सन्ति। तथा हि–

> चतुःसहस्री सूत्राणां पञ्चसूत्रविवर्जिताः।
> अष्टाध्यायी पाणिनीया, सूत्रैः माहेश्वरैः सहः ॥

बहुभिः वैयाकरणैः पाणिनीयव्याकरणे प्रक्रियाग्रन्था विरचिताः। तत्र सर्वप्रथमं द्वादशशताब्द्यां धर्मकीर्तिना अष्टाध्याय्यां प्रतिप्रकरणमुपयोगिनां सूत्राणां संकलनं कृत्वा **रूपावतारो** लिखितः। ततः चतुर्दशशताब्द्यां विमलसरावती महोदयेन प्रयोगानुसारं **रूपमाला** लिखिता। तदनन्तरं पञ्चदश शताब्द्यां रामचन्द्राचार्येण सरलया पद्धत्या पाणिनीयव्याकरणे प्रतिविक्षविक्षूणां सौविध्याय सरलैः शब्दैः **प्रक्रिया कौमुदी** नामको ग्रन्थो लिखितः। ग्रन्थस्यास्य मुख्यं प्रयोजनं ऋजुमार्गेण

प्रक्रिया प्रदर्शनमेवास्ति। यद्यपि ग्रन्थोऽयं रूपावतार-रूपमालाभ्यां विस्तरः, तथापि अष्टाध्याय्याः समस्तसूत्राणां संकलनमत्रापि न जातम् । पाणिनीय व्याकरणप्रवेश-कामेभ्यश्छात्रेभ्योऽस्य ग्रन्थस्य रचना जाता । ग्रन्थकर्ता ऋजुना सरण्या सरलैः शब्दैश्च मध्यमो मार्गोऽवलम्बितः। अस्य ग्रन्थस्य मुख्यं प्रयोजनं संक्षेपतः पाणिनीय व्याकरणस्य प्रक्रियाज्ञानं विद्यते–

कल्याणस्य तनुद्भवस्य नृपतिः कल्याणमूर्तेः ततः
कल्याणीं मतिमाकलय्य विषमग्रन्थार्थसंवित्तये ।
कृष्णं शेषनृसिंहसूरितनयं श्रीप्रक्रिया कौमुदीटीकां
कर्तुमसैविशेष विदुषां प्रीत्यै समाजिज्ञषत् ।।

रामचन्द्रस्य वंशः शेषवंशः कथ्यते। व्याकरणज्ञानाय शेषवंशोऽतिप्रसिद्धोऽस्ति। एतद्वंशीयैरनेकैः वैयाकरणैः पाणिनीयव्याकरणे प्रौढा ग्रन्थाः लिखिताः । रामचन्द्रस्य पितुर्नाम कृष्णमाचार्यः पुत्रस्य च नाम नृसिंह आसीत्, नृसिंहेन धर्मतत्त्वालोकनामको ग्रन्थो विरचितः, तत्रादौ तेन स्वपितरं रामचन्द्राचार्यम् अष्ट व्याकरणज्ञातारं साहित्यरत्नाकरञ्च मनुते । रामचन्द्राचार्यो हि स्वपितुः कृष्णमाचार्यात् पितृव्याद्गोपालाचार्याच्च सर्वाः विद्या अधीतवान् । अस्य प्रपौत्रः विठ्ठलाचार्यः प्रक्रियाकौमुद्याः प्रसादनाम्नी व्याख्या विहिता । प्रक्रियाप्रसादस्यैको हस्तलेखः पूनास्थडक्कान कालेज पुस्तकालये, द्वितीयो वडौदा राजकीय पुस्तकालये तृतीयश्च लन्दनस्थ भारतकार्यालयपुस्तकालये सुरक्षितोऽस्ति । तेषां ग्रन्यलेखनकालः क्रमशः १५८३, १५६०, १५३६ उट्टंकितोऽस्ति ।

## जितेन्द्रबुद्धिः

काशिकाया यावत्यो व्याख्या उपलभ्यन्ते तत्परिज्ञातारश्चये सन्ति, तत्र आचार्य जितेन्द्रबुद्धिकृता काशिकाविवरणपञ्जिकानाम्नी व्याख्या सर्वप्राचीना महत्वपूर्णा चास्ति या, न्यास इति नाम्ना प्रख्यातास्ति पण्डितसमाजे। द्वादश शताब्द्यां समुद्भवेन हरदत्तेन पदमञ्जर्यां न्यासकारस्य निर्देशपूर्वकमुल्लेखः कृतोऽस्ति । अतो हरदत्तात्पूर्वमेव न्यासकारस्य सत्ता स्वीकर्तुं शक्यते। कैयट-जितेन्द्रबुद्ध्योः अनेकानि वचनानि समानान्यवलोक्य मन्यन्ते विद्वांसो यदेतयोरेकोऽपरमनुकरोति, किन्तु न केनापि कस्यचिन्नाम गृहीतम् ।६।४।४३–७।३।७० सूत्रयोः प्रदीपे कैयटे केचित् पदेन हरदत्तं संकेतयति । अतोऽनुमीयते-हरदत्तः कैयटात्पूर्ववर्ती तस्माच्च न्यासकारः । किञ्च १११४–११६५ मध्यवर्तिना मैत्रेयरक्षितेन न्यासस्य तन्त्रदीपनाम्नी व्याख्या कृता । अतो न्यासकारस्य जितेन्द्रबुद्धेः समय एकादश शताब्दीति निश्चीयते । यत्तु अनुत्सूत्रपदन्यासेतिमाघे न्यासस्य नामोपलभ्यते तत्तु अन्यस्य न्यासकारस्य संकेतोऽस्ति, यतो व्याकरणनिकायेऽनेके न्यासकाराः प्रसिद्धाः सन्ति । अत एव भामहेन स्वकीयेऽलङ्कारसर्वस्वे लिखितमास्ति––

शिष्टप्रयोगमात्रेण न्यासकारमतेन वा ।
तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरेत् ॥
सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः ।
अकेनचन कुर्वीत वृत्तिस्तदगमको यथा ॥

मैत्रेयरक्षितेन न्यासस्य महती व्याख्या लिखिता, या तन्त्रदीपनाम्ना व्यवहृता वर्तते । सौभाग्यादस्य हस्तलेखः कलकता राजकीय पुस्तकालये सुरक्षितोऽस्ति । मैत्रेयरक्षितो हि व्याकरणशास्त्रस्यासाधारणो विद्वानासीत् । स पाणिनीयादि-व्याकरणस्योद्भटो ज्ञाताऽऽसीत् । स स्वकीयधातुपाठे लिखति–

वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।
नाम्ना तन्त्रप्रदोपं यो विवृतास्तेन धातवः ॥
आकृष्य भाष्यजलधेरथ धातुनाम
पारायणक्षणपाणिनिशास्त्रवेदी ।
कालाप-चान्द्र-मततत्त्वविभागदक्षो
धातुप्रदीपमकारोज्जगतो हिताय ॥

## व्याडिः

पाणिनीयव्याकरणे आचार्यो व्याडिः सङ्ग्रहनामकमेकं ग्रन्थं लिखिवान् आसीद्, यत्र लक्षश्लोका आसन् । तस्य सङ्ग्रह ग्रन्थस्य लक्षणमेवमस्ति—

विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संङ्ग्रहं तं विदुर्बुधाः ॥

महाभाष्यप्रदीपोद्योते लिखितमति यत्–'सङ्ग्रहो व्याडिकृतो लक्षसंख्याकोग्रन्थः' अपि च **दाक्षिपुत्रवचो** व्याख्यापटुः । इह हि पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपचितं लक्षग्रन्थपरिमाणं संग्रहाभिधानं निबन्धमासीत् । व्याडेर्नाम ऋक् प्रातिशाख्य-महाभाष्य-काशिका-भागवृत्यादिषूपलभ्यते ।

व्याडिनामानोऽनेके आचार्याः समभूवन्-एकः संग्रहकारो व्याडिः यस्योल्लेखः प्रातिशाख्ये, द्वितीयः कोशकारः यस्योद्धरणं कोशेषूपलभ्यते । तृतीयो रसज्ञो व्याडिः यस्योल्लेखः चीनीयात्रिणा इत्सिङ्गेन कृतोऽस्ति । व्याडेः पितुर्नाम व्यडः आसीत् । न्यासकारेण जितेन्द्रबुद्धिना पाणिनिना च व्याडिशब्दस्य क्रोडादिगणे पाठकरणाद् व्यडस्यापत्यं स्त्रीरिति विग्रहे व्याड्या शब्दो निष्पद्यते । अतो व्याडेर्भ-गिनी नाम व्यड्येति प्रतीयते ।

अडो वृश्चिकलाङ्गूलं, तेन तैक्ष्णं लक्ष्यते । विशिष्टोऽडस्तैक्ष्णमस्येति व्यडः व्यडस्यापत्यं व्याडिः । अत इञ् स्वागतादीनां चेतिवृद्धिप्रतिषेधैजागमयो र्निषेधे व्याडिः । व्याडिकृतलिङ्गामुशासनस्योल्लेखः वामन-हर्षवर्धन–हेमचन्द्रलिङ्गानुशा-सनेषूपलभ्यते ।

**व्याडेः शङ्करचन्द्रयो र्वररुचेर्विद्यानिधेः पाणिनेः ॥**

प्रथमस्य द्वितीयकाण्डे लिखितमस्तियत्—

प्रायेण संक्षेपरूचीन् अल्पविद्या परिग्रहान् ।
संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥ =८४८४
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायवीजानां महाभाष्ये निवन्धने ॥ =८४८५

पुरुषोत्तमदेवेन व्याडेर्नामान्तरं विन्ध्यस्थ इति लिखितमतोऽयं विन्ध्यपर्वत निवासी प्रतीयते । समुद्रगुप्तेन कृष्णचरिते मुनिकविवर्णनप्रसङ्गे लिखितमस्ति-यत् व्याडिः रसाचार्यः श्रेष्ठमीमांसको महाकविश्चासीत्—

रसाचार्यः कवि र्व्याडि शब्दब्रह्मैकवाङ्मुनिः ।
दाक्षिपुत्रवचोव्याख्यापटु र्मीमांसकाग्रणीः ॥ =१६ ॥
वालचरितं कृत्वा यो जिगाय भरतं व्यासं च ।
महाकाव्य विनिर्माणे तन्मार्गस्य प्रदीपमिव ॥ =१७ ॥

व्याडेरसाचार्यत्वं पुराणसाहित्ये सुप्रसिद्धमस्ति । पारदरसाचार्यत्वेन तस्य नाम गरुडपुराणे निर्दिष्टमस्ति—

शुद्धं ततो विमलवस्त्रनिवर्षणेन
स्यान्मौक्तिकं विमलसद्गुणकान्तियुक्तम् ।
व्याडि र्जगाद जगतां हि महाप्रभाव—
सिद्धो विदग्धहिततत्परया कृपालुः ॥ =३७ ॥

व्याडे र्दाक्षायण इति नामान्तरमासीदत एनं पाणिनेः मातुलं कथयन्ति विद्वांसः ।

व्याडेः समयः—भारतयुद्धात्पश्चात् २००–३०० मध्ये वर्तते । एतेन सङ्ग्रह-नामको ग्रन्थो लिखित आसीत् । तथा चोक्तं महाभाष्ये २।३।६६। व्याडिकृतः सङ्ग्रहो नेदानीमुपलभ्यते । अतः तत्स्वरूपं निश्चेतुं दुःशकम् । अथापि चन्द्रव्याकरण-वृत्तौ पञ्चकः सङ्ग्रह इत्युदाहरणदर्शनेनानुमीयते यत् अष्टकं पाणिनीयमितिवत् सङ्ग्रहः पञ्चाध्यायात्मक आसीत् । पुण्यराजेनापि चर्चितं वाक्यपदीयटीकायाम् । नागेशः संङ्ग्रहं लक्षश्लोकात्मकं मनुते । वाक्यपदीय इव संग्रहो दार्शनिकसंग्रहोऽस्ति । संग्रहे १४ सहस्रपदार्थानां संग्रह आसीत् । संग्रहवचनानि भर्तृहरि–कैयट नागेश-हरत्तादयो महता समाददरेण गृह्णन्ति । महाभाष्ये २।३।६३ शोभना खलु दाक्षा-यणस्य संग्रहस्य कृतिः ।

## व्याकरणशास्त्राध्ययनस्य प्रयोजनम्—

कस्यचित् शास्त्रस्याध्ययनप्रवृत्तये तच्छास्त्राध्ययनप्रयोजनस्य स्पष्टीकरण-मनिवार्यतयोपतिष्ठते । यावदध्येता कस्यचिद्ग्रन्थस्याध्ययनेन लाभहानी न जानीयात्तावत्तस्य न तत्र प्रवृत्तिर्नवा निवृति र्भवितु मर्हति । अतो व्याकरणा-

ध्यधनस्यापि किञ्चिद् दृष्टमदृष्टं वा फलं वक्तव्यमेव। यतो हि प्रयोजनमन्तरा न कोऽपि कुत्रापि प्रवर्तते **'प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तते'**। तस्माद् व्याकरणशास्त्रविवेचनात् पूर्वं तच्छास्त्रस्य प्रयोजननिर्देशः अत्यावश्यकः। अतएवोक्तं श्लोकवार्तिके श्रीमता कुमारिलभट्टेन—

सर्वस्यैव शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥ =१२॥

अपिच

सिद्धार्थं ज्ञातसम्बन्धे श्रोतुं श्रोता प्रवर्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रोजनः ॥ =१७॥

कस्यापि ग्रन्थस्य प्राशस्त्याय ग्रन्थादौ अनुवन्धचतुष्टयस्यावश्य-वक्तव्यत्व-निर्देशः कृतोऽस्ति अभियुक्तैः—

सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनम्।
ग्रन्थादौ तेन वक्तव्यं तस्माद् ग्रन्थः प्रशस्यते ॥

महर्षिणा पाणिनिना व्याकरणशास्त्रस्य रचना कृता, किन्तु तेन तस्य किमपि प्रयोजनं न प्रोक्तम्। अतो मीमांसाशास्त्रसम्प्रदाये **'प्रयोगो यन्तु शास्त्रवात्** ( १ । ३ । २४ ) इति वर्तिके लिखितमस्ति

न तावत् शास्त्रकारेण किञ्चिदुक्तं प्रयोजनम्।
फलं चैतानपि ग्रन्थे स्यात् प्रयोजनविस्मृतिः ॥

अत्रोच्यते पाणिनिना किमपि प्रयोजनं नोक्तमित्यनेन न काऽपि हानिः यथा धर्मपरायणस्य जनस्य कृते सन्ध्यावन्दनादेः प्रयोजनोपदेस्यावश्यकता न भवति। अत एव ब्राह्मणेन प्रयोजनमन्तरापि षडङ्गस्य वेदस्य अध्ययनमवश्यकर्तव्यतया श्रुतावुपदिष्टमस्ति–"**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्च**। अतो व्याकरणाध्ययनाधिकारिणे यदि पाणिनिना किमपि प्रयोजनं नोक्तं तर्हि न तेन किमप्यसङ्गतम्। अतएव जयन्तभट्टेन न्यायमञ्जर्यामुक्तमस्ति--यद्यपि सूत्रकृता स्वयं प्रयोजनं न किमपि वक्तव्यमिति।

पशपशह्निके महाभाष्येऽपि लिखितमस्ति यद् ब्राह्मणः कारणानुसन्धानमन्तरापि षडङ्गस्य वेदस्याध्ययनमवश्यं कु र्याद् यतस्तद्वरा धर्मस्यावगति-**'आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्चेति**। प्रधानं च षट्सु अङ्गेषु मुखमिव व्याकरणम्। प्रधाने च कृतो यत्नो फलवान् भवति।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षु निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।

इति शिक्षावचनाद् वेदराशेः षडङ्गेषु शिक्षा-व्याकरण-छन्द-निरुक्त-

ज्यौतिष-कल्पेषु व्याकरणं मुख्यमङ्गम् । **'सर्वस्य गात्रस्य शिरः प्रधानम्'** इत्यभियुक्तोक्तेः, मुखस्यैव प्रायः पुरुषभेदपरिचायकत्वदर्शनाच्च ।

व्याकरणाध्ययनस्य मुख्यानि पञ्च प्रयोजनानि-रक्षोहागमलध्वसन्देहा इत्युक्तानि इतराणि महाभाष्योक्तानि त्रयोदश गौडप्रयोजनानि च सन्ति । एवं व्याकरणाध्ययनस्य पञ्चमुख्यत्रयोदशगौणभेदेनाष्टादश प्रयोजनानि महाभाष्ये भगवता पतञ्जलिना सोदाहरणं प्रदर्शितानि । तत एवावगन्तव्यानि ।

वस्तुतः पाणिनिसमये बाल्यकालत एव वेदपाठेन सदैव व्याकरणध्ययनस्य प्रचलनमासीत् । अतो जनानां प्रयोजनज्ञानस्यौत्सुक्यमेव न भवतिस्म । अतः पाणिनिना व्याकरणध्ययमनस्य प्रयोजनं नोपात्तम्, किन्तु कात्यायनसमये वेदाध्ययनानन्तरं व्याकरणपठनप्रवृतये समृद्धाः शिष्या भूयो भूयः प्रयोजनजिज्ञासां कुर्वतेस्म । अतस्तावत् कत्ययनेन मुख्यानि रक्षोहागमलध्वसन्देहरूपाणि पञ्च प्रयोजनामि निर्दिष्टानि । इत्थं पाणिनिना व्याकरणस्य किमपि प्रयोजनं नोपात्त, किन्तु कात्यायनेन पञ्च प्रयोनानि प्रोक्तानि । भगवान् पतञ्जलिस्तु तानि पञ्च प्रयोजनानि मध्यमाधिकारिणे उपयुक्तानि मत्वा स्वयं मन्दाधिकरिभ्यः अपराण्यपि त्रयोदश प्रयोजनानि सोपष्टम्भं महाभाष्यस्यारम्भे पशपशाह्निके प्रोक्तानि । अतएव जयन्तभट्टेन स्वन्यायमञ्जर्यां 'व्याख्यतृगणद्वारा यानि व्याकरणस्य प्रयोजनानि निर्दिष्टानि सन्ति, तानि अध्येतृवर्गस्य समुत्साहप्रबर्द्धनायैवास्तीत्युक्तम् ।

वस्तुतस्तु अनुशिष्यन्तेऽपशब्देभ्यः पृथक्कृत्य कथ्यन्ते साधुशब्दा अनेनेति शब्दानुशासनं नामशास्त्रमिति प्रतिज्ञया शब्दसाधुत्वज्ञानं व्याकरणाध्ययनस्य मुख्यं प्रयोजनम् । इतराणि चानुषङ्गिकफलानि ज्ञेयानि ।

## व्याकरणशास्त्रस्य प्रमुखा आचार्याः—

भारतवर्षे व्याकरणशास्त्रस्यारम्भः कदाऽभवत् तथाऽस्य प्राथमिक आचार्यः कोऽस्तीतीदं विशादास्पदं विद्यते । व्याकरण सम्बन्धिनो यवन्तो ग्रन्था अद्यपर्यन्तमुपलब्धास्तेषु वैभिन्न्यमेवावलोक्यते ।

त्रेतायुगे भगवतो मर्यादापुरुषोत्तमस्य श्रीरामस्य समये रामायणस्योल्लेखानुसारं नवसंख्याकानि व्याकरणानि प्रचलितान्यासन् **'सोऽयं नव व्याकरणार्थवेत्ता ।** एतानि नव व्याकरणानि कनीति न तत्र स्पष्टी कृतमस्ति ।

महतो गणितज्ञस्य भास्कराचार्यस्य समये अष्टानां व्याकरणानां प्रचलनमासीत् । तदुक्तं तस्य लीलावत्याम्—

अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः<br>
षट्तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः ।

रत्नानां त्रितयं द्वयं च बुबुधे मीमांसयोरन्तरं
सद् ब्रह्मैक अगाधबोधमहिमा सोऽस्याः कविः भास्करः ॥

संभावत एषामेवाष्टानां वैयाकरणानामुल्लेखं दृष्ट्वा वोपदेवेन स्वकीये कविकल्पद्रुमे अष्टव्याकरणकर्तॄणां नामोल्लेखपूर्वकं सूचना प्रदत्ताऽस्ति—

इन्द्रश्चन्द्रःकाशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौहि शाब्दिकाः ॥

भास्कराचार्यस्य समसामयिको गणारनमहोदधिकारो जयन्तभट्टो लिखति—

शालातुरीयशकटाङ्कजचन्द्रगोमीदिग्वस्त्रभर्तृहरि वामनभोजमुख्याः ।
मेधाविनः प्रवरदीपककर्तृयुक्ताः प्राज्ञै र्निषेवितपदद्वितया जयन्ति ॥

हैमबृहद्वृत्यवचूर्णौ अपि अष्टानामेव वैयाकरणानामस्त्युल्लेखः—

ब्राह्ममैशानमैन्द्रं च प्राजापत्यं बृहस्पतिम् ।
त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्टकम् ॥

श्रीतत्त्वविधिनामके वैष्णवग्रन्थे निम्नाङ्कितानां नव व्याकरणानाभुल्लेखोऽवाप्यते—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम् ॥

काशिका वृत्तौ च ( ४ । २ । ६० ) पञ्चानां व्याकरणानामस्ति उल्लेखः, परन्तु तत्र तेषां नामानि न सन्ति निर्दिष्टानि । कियन्तो व्याकरणस्यार्थं—सूत्र-पाठ-धातुपाठ-गणपाठ-उणादिपाठ-लिङ्गानुशसनानीति अवगच्छन्ति । तथाऽन्ये च पदच्छेद-समास-वृत्ति-अनुवृत्ति-उदाहरणानीति जानन्ति ।

एवं केषाच्चिन्मते पञ्च, केषाञ्चनमतेऽष्टौ, केषाञ्चिन्मते च प्रसिद्धानि नव व्याकरणानि पाणिनितः पूर्वं प्रचलितानि आसन्, तेषामाचार्याश्च तत्संख्याका एवाभूवन् ।

## माहेशव्याकरणम्

विपश्चितामेको महान् समुनायो माहेशं व्याकरणमादिव्याकरणरूपेण स्वीकुर्वन्ति तथा एतत्कर्तारं भगवन्तं सदाशिवमेव मन्यते । देवादिदेवो महेश्वरो व्याकरणशास्त्रस्याकरस्वरूपमस्ति, महेशश्च तस्यास्ति नामान्तरम् स एव व्याकरण शास्त्रस्यास्ति आदिवक्ता । महेश्वरप्रोक्तं व्याकरणं माहेशव्याकरण-मुच्यते । अस्मिन्नेव व्याकरणे चतुर्दशप्रत्याहारसूत्राणामाविर्भावो जातः । अतएवोक्तं नन्दिकेश्वरकृतकाशिकायाम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥

प्राचीने काले माहेशव्याकरणं बद्रिकाश्रम—काश्मीरादौ प्रचलितमासीत् ।

कालान्तरे तदेव तत्सारांशो वा समतलभूमौ समागत्य ऐन्द्रादिव्याकरणं प्रभावितं चकार। पूर्वमार्यावर्तादेः ब्राह्मणकुमारा विशिष्टविद्यालाभार्थं सरस्वतीक्षेत्रे काश्मीरादौ गच्छन्तिस्म । कौषीतकीब्राह्मणस्य व्याख्यां कुर्वन् षड्गुरु शिष्यो लिखति–

'प्रज्ञाततरा वागुच्यते । काश्मीरे सरस्वती कीर्त्यते । बदरिकाश्रमे वेदघोषः श्रूयते । वाचं शिक्षितुं सरस्वतीप्रसादार्थमुपज्ञमेव यन्ति । यो वा प्रसादं लब्ध्वा तत आगच्छतिस्म प्रसिद्धमाहस्म सर्वलोके ।'

यथा सत्यवर्मणा कुमारकार्तिकेयस्य कृपया कौमारव्याकरणस्य प्रथमं सूत्रमवाप्तं तथैव पाणिनिनाऽपि भगवत आशुतोषस्य शिवस्य प्रसादेन लुप्तप्रायस्य माहेशव्याकरणस्य चतुर्दश प्रत्याहारसूत्राणि समधिगतानि । एवं पाणिनिना प्रत्याहारसूत्राणां रचना न कृता, किन्तु माहेश्वरप्रसादादेव तानि लब्ध्वा तदाधारेण स्वं व्याकरणं प्रणीतम् । तथा च माहेश्वरव्याकरणस्य चतुर्दशप्रत्याहारसूत्राणि संप्राप्य तत्रान्तेऽनुबन्धचतुर्दशानि संयोज्य पाणिनिना अष्टध्यायीसूत्राणि निर्मितानि । इत्थं माहेश्वराणि चतुर्दश प्रत्याहारसूत्राणि एव पाणिनेरष्टाध्याय्याः प्राणभूतानि सन्तीति निर्विवादम् । अष्टाध्यायीमूलभूतानां माहेश्वरसूत्राणामनुशीलनेन प्रतीयते यत् तान्यपि अनादिवेदनिर्दिष्टानि समाम्नायसूत्राणि सन्ति । गुरुज्ञानेनासन्तुष्यता पाणिनिना हिमालये शिवोपासनया तान्युपलभ्य तत्रानुबन्धान् संयोज्य स्वकीयं सर्वाङ्गपूर्णं सर्वतोऽतिशायि विशालं व्याकरणं निर्मितम् । भर्तृहरित आरभ्य भट्टोजिदीक्षितपर्यन्तं सर्वेषां वैयाकरणानां मतमस्ति यदिमानि प्रत्याहारसूत्राणि न महेश्वरविरचितानि सन्तिनापि पाणिना वा कृतानि, सन्ति, किन्तु वेदवदनादिसिद्धानि महेश्वरकृपया लब्धानि पाणिनिना। अते एवोक्तं सिद्धान्तकौमुद्या आरम्भे एव 'इति माहेश्वराणि सूत्राणि अणादि संज्ञार्थानि ।'

अत एव शिक्षायामप्युलिखितमस्ति यद् एतत् व्याकरणमूलभूत चतुर्दश सूत्राणि परमकारुणिकेन महेश्वरेण पाणिनये उपदिष्टानि सन्ति—

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५९ ॥

## व्याकरणस्योपादेयत्वम्

नाविदितमस्ति केषाञ्चिदपि विपश्चितां यन्निखिलभारतीयभाषाप्रपञ्चानां जननी अदिभाषा संस्कृतभाषा समेषां जननीव, समादरणीया समग्रगणीया च । सर्वभाषाप्रसुः सेयं, सुरगवी ललितकलया सौष्ठवौदार्यसंपदा केषां सहृदयहृदयानामन्तः कारणं लौहधातुमयस्कान्तमणिरिव न विद्रावयाते ।

अस्मिन्नेव संस्कृतवाङमये समस्ता हृद्या लौकिका अलौकिकाश्च विषयाः समुल्लसन्तीत्यपि नागोचरं केषाञ्चिदपि विवेकिनां विपश्चिताम्। तेषु वेदा वेदाङ्गानि च प्राधान्यमादधते। वेदाङ्गेषु च षट्सु अङ्गेषु मुखमिव व्याकरणमेव प्रधानमङ्गमित्यपि भगवता भाष्यकारेण पतञ्जलिमुनिना महाभाष्ये सोल्लासं बभाषे। तत्रापि लौकिक-वैदिकशब्दव्युत्पादकस्य पाणिनीयव्याकरणस्यैव प्रमुखं वेदाङ्गत्वमभ्युपगतं सर्वैः। श्रीमता भास्कराचार्येणापि व्याकरणशास्त्राध्ययनान्तरमेवान्यशास्त्रस्याध्यनाधिकारित्वं प्रतिपादयता स्पष्टमुद्घोषितम्—

> यो वेद वेदवदनं सदनं हि सम्यग्
> ब्राह्म्यः स वेदमपि वेद किमन्यशास्त्रम्।
> यस्मादतः प्रथममेतदधीत्य धीमान्
> शास्त्रान्तरेषु भवति श्रवणाधिकारी॥

अत एव वोपदेवेन स्वकीये कविकल्पद्रुमेऽष्टानाम् इन्द्र-चन्द्र-काशकृत्स्न-आपिशलि-शाकटायन-पाणिनि-अमरसिंह-जैनेन्द्राणां प्रमुखानां वैयाकरणानां सर्वोत्कृत्वं संसाधितम्। तैश्चाष्टभिः आचार्यैः क्रमशः ऐन्द्रं चान्द्रं काशकृत्स्नम् अपिशलं शाटकायनं, पाणिनीयम् आमरं जैनं चेत्यष्टौ व्याकरणानि निर्माय व्याकरणशास्त्रस्य महान् विस्तारः कृतः। एषु अष्टसु व्याकरणेषु उग्रतपसा समाराधितं महेश्वरप्रसादीकृतं पाणिनीयं व्याकरणमेवात्मनोऽपूर्वरचनानैपुण्येन मूर्धन्यतामाटीकतमित्यपि निश्चप्रचं सुधियां समाजे। अत एवोक्तं पराशरीयपुराणे—

> पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
> सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

तस्यैतस्य सर्वातिशायिनः पाणिनीयव्याकरणस्य विवरणभूतं शेषावतारमहर्षिपतञ्जलिप्रणीतं महाभाष्यं सर्वोत्कृष्टतामुपगतं विशेषवैदुष्याभिव्यञ्जकं निगूढतत्त्वप्रकाशकं च गण्यते वैयारणनिकाये।

तस्मान्निर्विवादमेव व्याकरणशास्त्रस्य पदपदार्थविभासकत्वेन सर्वशास्त्रोपकरकत्त्वं तथापि आम्नायमूलकत्वेन झटित्यज्ञानकान्तारसञ्चारसन्तापनिवारकत्वात् पदवाक्यप्रमाणपरवारपारीणानां मस्तकालङ्कारमणिरिवावभासते पाणिनीयं व्याकरणम्। अतएव अनर्वाचीनं वचनमनूचाना वदन्ति—

> काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।

तदिदं '**विद्याकामस्तु गिरिशम्**' इति श्रीमद्भागवतीयपद्यानुसारमघटितघटनापटीयसो भगवतो भवानीपतेः आशुतोषस्य शब्दार्णबतरणतरणिमिव, उदग्रतपः फलमिव, मनोरथनिदानमिव, चतुर्दशसूत्रात्मकं समाम्नायं ढक्कानिनाद-

विस्फुरितं स्फुलिङ्गमिव देदीप्यमानं समुपलभ्य दाक्षीपुत्रो महर्षिः पाणिनिः तपः प्रभावविस्फूर्तिशालिन्या प्रतिभयाऽष्टभिरध्यायैरुपनिबबन्ध पाणिनीयं व्याकरणम् ।

तदनन्तरं विकरालकलिकालमाहात्म्यात् मलिनमनसां पाणिनेरभिप्रायमाविष्कर्तुमसमर्थानां पुंसां कृते तत्र भगवता पतञ्जलिमुनिना विशदव्याख्यात्मना सर्वाङ्गपूर्णं विविधपदपदार्थावबोधजनकं महाभाष्यं निरमायि। ततो व्याख्याग्रन्थाः।

## उपसंहारः

एवं सर्वाङ्गपोषणपूर्वकं विचारो न व्याकरणमन्तरा सञ्चरति । अतो देशकालपरिस्थितीनां ज्ञातारः कुशला नेतारः सर्वव्याकरणनिकषायमाणं पाणिनीयमेव व्याकरणमित्युररीकृत्य अनेकटीकोपटीका-व्याख्या-निबन्धसोपानपरम्परामातेनुः, किन्तु शाब्दिकानां निकाये शब्दब्रह्मवादस्य निरूपणाय वाक्यपदीयं विहाय न कोऽपि ग्रन्थः तादृश आसीद्, येन वैयाकरणाः स्वसिद्धान्तप्रतिपादने प्रभवो भवेयुः । अतो भट्टोजिदीक्षितेन शब्दकौस्तुभः कौस्तुभ इव निरमायि । तत्र तेन काल्पनिकप्रकृतिप्रत्ययादीनां शक्तिनिरूपिकाः शाब्दबोधप्रकारदर्शिकाः कारिका निर्मिताः तासामेव व्याख्यानभूतोऽन्वर्थनामा वैयाकरणभूषणसारो निर्मितः कौण्डभट्टेन । अतोभूषणेऽविचारितानां पदार्थानां विशुद्धस्वरूपप्रकाशनाय वाक्यपदीयप्रदर्शितेन पथा दर्शनशास्त्रपदवीं शाब्दिकानां दृष्टिपथमानेतुं नागेशभट्टेन स्फोटायनाचार्यप्रवर्तितस्फोटपदार्थोपपत्तये वैयाकरणसिद्धान्त लघुमञ्जूषापरमलघुमञ्जूषा च रत्नमञ्जूषेव व्यरचि । यत्र वैयाकरणसिद्धान्तसिद्धस्य स्फोटपदार्थस्य विस्तरतो निरूपणं कृतमस्ति ।

शाब्दिकानां निकाये ( १ ) वर्णस्फोट-( २ ) पदस्फोट-( ३ ) वाक्यस्फोट-( ४ ) अखण्डपदस्फोट-( ५ ) अखण्डवाक्यस्फोट-( ६ ) अर्णजातिस्फोट-( ७ ) पदजातिस्फोट-( ८ ) वाक्यजाति स्फोटभेदेनाष्टौ स्फोटाः ( स्फुटत्यर्थो यस्मात्, स्फुट्यते व्यज्यते वर्णैर्यो वा स स्फोट इति व्युत्पत्त्या ) अर्थबोधजनकाः 'परावाङ् मूलचक्रस्था' इत्यादिना नानासाधनसिद्धा नागेश भट्टेनानेकयुक्त्या प्रतिपादिताः । तत्र वर्णस्फोटः शास्त्रप्रक्रियामात्रनिर्वाहको नत्वर्थजनकः, शक्तिमत्वाभावात् । सति च शक्तिमत्त्वे 'धनम्' वनम्' इत्यादौ प्रतिवर्णानामर्थवत्त्वेन प्रातिपदिकत्वान्नलोपादि कार्यं स्यात् । अतो वाक्यस्फोट एव लोकेऽर्थप्रत्यायकत्वेन शक्तिमान् । प्रमाणञ्चात्र **'पदसमूहो वाक्यमर्थसमाप्तौ समर्थम्,** इति न्यायभाष्यकृदुक्तमेव। कौण्डभट्टेनापि **'वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीत्युक्तम्।'** एवञ्च वाक्यस्फोटात्मकशब्दब्रह्मज्ञानं व्याकरणशास्त्राध्ययनस्य मुख्यं प्रयोजनम्। अत एव च 'वाक्यस्फोटात्मकस्य ब्रह्मण एव तात्त्विकता तद्व्यतिरिक्तस्यवस्तुनोऽतात्विकत्वात्, सिद्धान्तरस्यामुख्यत्वम् ।' इति भाष्योक्तं संगच्छते ।

तथाचौपाधिकधर्मेण न वस्त्वानन्त्यं भवतीति विभाव्याकाशवद् एक एव वाक्यस्फोट इति सिद्धान्तो वैयाकरणानाम् ।

यथा जपाकुसुमादिलौहित्य-पीतत्वादिव्यञ्जकोपरागवशादेक एव स्वच्छः स्फटिकः, लोहितः स्फटिकः, पीतः स्फटिकः, इत्यादिनानानुभवविषयमधिगच्छति तथैव एक एव स्फोट उपाधिभेदादष्टधा सम्पद्यते ।

शास्त्रे प्रकृतिप्रत्ययादिव्युत्पादनं तु रेखागवयन्यायेन वास्तवस्फोटज्ञानार्थंव । प्रतिवाक्यं सङ्केतग्रहासम्भवात्तदन्वाख्यानस्य लघुनोपायेनाशक्यत्वाच्च । कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थविभागं शास्त्रमात्रविषयमाचार्याः कल्पयन्तिस्म । अवयवार्थबोधनद्वारा समुदायार्थबोधने एव ऋषीणां तात्पर्यात् ।

स्फोटवादो हि वैयाकरणनिकाये प्रधानवादः । तेषां शब्दनित्यत्वस्यायमेवाधारः । शब्दानित्ववादिनो नैयायिका मीमांसकाश्च स्फोटवादस्य खण्डनं कुर्वन्ति, परं शब्दनित्यत्ववदिनो वैयाकरणा पूर्वोक्तरीत्या तं समर्थयन्ति ।

महाभाष्यकारपतञ्जलिनतेन स्फोटो द्रव्यं ध्वनिस्तु तद्गुणः–'एवं तर्हि स्फोटः शब्दः ध्वनिस्तु तद्गुणः, (१।१।७०) भर्तृहरिमतानुसारं ध्वनिस्तावद्विविधः प्राकृतो वैकृतश्च । तत्र प्राकृतः प्रकृतया=स्वभावेन स्फोटव्यञ्जको भवति, वैकृतश्च न तथा । तदुक्तं तेन वाक्यपदीये--

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।<br>
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ॥

अन्ते मदीयैतद्व्याकरणेतिहासदिग्दर्शनस्य वैयाकरणनिकाये स्फोटवादविवेचनस्य च श्रमसाफल्याय व्याकरणरहस्यजिज्ञासून् पाठकानभ्यर्थ्य विरमामि, अभिनन्दयामि च 'उत्तरप्रदेशीय संस्कृतऐकादमीसदस्यान् येषामनुकम्पयाऽर्थसाहाय्यमवाप्येदं वैयाकरणनिकाये स्फोटवादविवेचनं प्रकाश्यतां नीतं मया । यदि संस्कृत एकादमीत आर्थिकसहायता नावाप्ता स्यात्तर्हि ग्रन्थस्यास्यातिशीघ्रं प्रकाशनं न संभवेत् । चौखम्बासुरभारतीप्रकाशनेनाप्यांशिकार्थसहयोगं विधायात्मनः संस्कृतप्रियतायाः परिचयो दत्त इति प्रसीदतितमां मेचेत इति शम् ।

विद्वद्वशम्वदः<br>
**श्रीकृष्णमणित्रिपाठी**<br>
**भारतीय साहित्य शोधसंस्थानम्**<br>
गङ्गामहल, डी० २०/१८<br>
मुंशीघाट, वाराणसी

श्रीकृष्णजन्माष्टमी<br>
सं० २०३४

**लेखकवंशपरिचयः**

पुराणादिषु शास्त्रेषु सङ्गीतयशसो मुदा ।
देवश्लाघ्यस्य दिव्यस्य सर्वप्राणिहितैषिणः ॥ १ ॥

भारतस्योत्तरे भागे देवरियाख्यमण्डले ।
धर्मागतछपरायां प्रसिद्धायां स्वमण्डले ॥ २ ॥

धनधान्यदिना पूर्णे सदाचारमनोरमे ।
कुवेरनाथसविधे त्रिपाठिब्राह्मणान्वये ॥ ३ ॥

रमेशमणिविदुषः प्रख्यातस्य सुकीर्तये ।
नागेश्वरमणि विद्वान् तनयोऽभूद् द्विजाग्रणीः ॥ ४ ॥

तदात्मजाश्च चत्वारो जाता विद्याविशारदाः ।
शीलसौजन्यसम्पन्ना विनीता बुद्धिशालिनः ॥ ५ ॥

बलदेवः सुदामा च भरोसापण्डितस्तथा ।
चतुर्थश्चास्ति श्रीकृष्णमणिशास्त्री प्रसन्नधीः ॥ ६ ॥

माता फूलमती देवी श्रीमती शुभलक्षणा ।
अजीजनत् सुतानेतान् मोदनिर्भरमानसा ॥ ७ ॥

चत्वारो भ्रातरो ह्येते लोककल्याणकारणः ।
सर्वेऽपत्यकलत्रादिसुखिनः सौम्यमूर्तयः ॥ ८ ॥

वात्सल्यस्नेहभाक् तेषु कनीयान् ग्रन्थलेखकः ।
श्री श्रीकृष्णमणिर्वाग्मी काशीवासी सुधीवरः ॥ ९ ॥

एतस्याप्यद्भुताः सन्ति तनया भाग्यशालिनः ।
विजयश्च सुरेशश्च महेशश्च दिनेशकः ॥ १० ॥

प्रासोष्ट शुभगानेतान् द्वे सुते अपि शोभने ।
चन्द्रकलां च सावित्रीं राजदेवी मुदान्विता ॥ ११ ॥

सर्वसौभाग्यसम्पन्ना गृहिणी धर्मचारिणी ।
रससन्ततिमाता सा मोदमाप्नोति सर्वदा ॥ १२ ॥

एतेषु विजयस्यास्ति पुत्रो विनयनामकः ।
वालविद्यालयेऽधीते वयस्यै र्मोदमावहन् ॥ १३ ॥

कुवेरनाथकृपया विप्राणां च प्रसादतः ।
स्वधर्मकर्मनिरतो वंशोऽयं भ्राजते भुवि ॥ १४ ॥

वैयाकरणनिकाये

# स्फोटवादविवेचनम् ।

वेदान्तैर्वेदनीयं सकलमतिमतैर्माननीयं मुनीन्द्रै-
गौर्या पत्न्या परीतं मनसिजमथनं लासयन्तं महेशम् ।
नृत्ये वै ताण्डवाख्ये शिवशिरसि कृतां कृत्तिमाकृष्टुकामं
व्यावल्गद्वल्गुबाहुं प्रसृमसुषमं शम्भुसूनुं नमामि ॥ १ ॥

भुक्तिमुक्तिप्रदं देवं ध्यात्वा विश्वेश्वरं शिवम् ।
स्मृत्वा सारस्वतं तत्त्वं नत्वा गुरुपदाम्बुजम् ॥ २ ॥

त्रिपाठ्युपाह्व-श्रीकृष्णमणिना विदुषां मुदे ।
वैयाकरणसिद्धान्ते स्फोटवादो विविच्यते ॥ ३ ॥

शब्दो हि शाब्दबोधं जनयितुं सामर्थ्यं स्वस्मिन्नादधाति, सामर्थ्य-मन्तरेण सोऽपि कमप्यर्थमवगमगोचरतां न नयति। शब्दस्य सामर्थ्यं हि ज्ञानमुत्पादयितुमस्ति अभ्युन्नतं साधनं दार्शनिकानां निकाये। प्रथमं कण्ठताल्वाद्यभिघातादुत्पन्नस्याभिव्यक्तस्य तस्य श्रोत्रेन्द्रियेण साक्षात्कारो भवति। शब्दश्रुतेरनन्तरं शब्दनिष्ठायाः शक्तेः स्मृतिर्जायते। सा च शक्ति-धीरित्यभिधीयमाना शाब्दबोधजनिकाऽभ्युपगता, तया च शक्तिधिया पदार्थोपस्थितिर्जायमाना शाब्दबोधात्मकं बोधमुत्पादायितुं स्मृति-रूपा विलक्षणज्ञानस्वरूपा वा स्वीकृता। तथा च शब्दानां श्रावणप्रत्यक्षं, शक्तेः स्मरणं, पदार्थोपस्थितिश्च शाब्दबोधात्मकं फलं जनयति। अत एवाभियुक्तानां नैयायिकानामियमुक्तिः सर्वसम्मता—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधं फलं तत्र शक्तिधीः सहकारिणी ।

यथा शाब्दबोधे शक्तेर्ज्ञानमुपयुज्यते तथा लक्षणाज्ञानमपि अतीवो-पयुज्यते। एवञ्च शाब्दी आर्थी च व्यञ्जनापि परमोपयोगिनीति शक्ति-लक्षणा-व्यञ्जनात्मकवृत्तीनामपि तिसृणां महानुपयोगोऽभ्युपगतः शाब्द-बोधोत्पत्तये । अत एव शाब्दिकशिरोमणीनां शेखर-मञ्जूषाद्यनेकग्रन्थ-रत्नानां प्रणेत्रा विद्वद्गोष्ठ्यां प्रभूतं प्रसृतेन स्वनामधन्येन वदान्येन

श्रीनागेशभट्टमहाभागेनाभिहितः कार्यकारणभावः स्वलघुमञ्जूषायामादावेव तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसमानाधिकरण्य-स्वाश्रयपदविषयकत्वोभयसंबन्धेन बोध्यम्। अतो नागृहीतशक्तिकस्य नापि विस्मृतवृत्तिकस्य, न वा तत्पदमजानतः, न च घटपदाश्रयत्वेनोपस्थिताकाशस्य, नापि जनकतयोपस्थितचैत्रादेश्च बोधः। इत्येवं कार्यकारणभावेऽपि वृत्तीनां घटकतयाऽत्यावश्यकत्वमस्ति।

तथा च तासां वृत्तीनामाश्रयः शब्दः क इति जिज्ञासायाः समुदयः। अपि च घटादिशब्दात् पटादिविषयकशाब्दबोधवारणाय तच्छब्दजन्यतद्विषयकशाब्दबोधं प्रति तच्छब्दजन्यतद्विषयकोपस्थितिः कारणम्। घटादिशब्दात् पटादिविषयकोपस्थितेरभावान्न पटादिविषयको बोधः। घटपदादेः समवायसम्बन्धेन सम्बन्ध्याकाशविषयकोपस्थितिबलादाकाशविषयकशाब्दबोधवारणाय तच्छब्दजन्यतद्विषयकशाब्दबोधं प्रति तच्छब्दनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितिः कारणम्। आकाशोपस्थितेर्वृत्तिज्ञानजन्यत्वाभावान्न शाब्दबोधजनकत्वम्।

एवं शाब्दबोधोपस्थित्योः कार्यकारणत्वकल्पनेऽपि घटपदाद् घटत्वप्रकारकघटविशेष्यकबोधस्येव घटप्रकारकघटत्वविशेष्यकस्यापि बोधस्य बाधकाभावादापत्त्या तच्छब्दजन्यतत्प्रकारकतद्विशेष्यकबोधम्प्रति तच्छब्दनिष्ठवृत्तिज्ञानाधीनतत्प्रकारकतद्विशेष्यकोपस्थितिः कारणं वाच्यम्। तथा च घटपदाद् घटप्रकारकघटत्वविशेष्यकोपस्थितेरभावान्न तादृशशाब्दबोधस्यापत्तिः।

एवं कार्यकारणभावस्य शाब्दबोधोपस्थित्योः सिद्धान्तितत्वे कारण कोटौ शब्दनिष्ठवृत्तिज्ञानस्यापि प्रवेशाद् वृत्त्याश्रयः शब्दः क इति जिज्ञासा जागर्ति कार्यकारणभावगवेषिणां समेषां स्वान्ते।

न च तादृशः शब्दो वर्णात्मक एवेष्यते, गकारादिवर्णावगमे सत्यर्थ प्रतीतेर्भावात् तदभावे च प्रतीत्यभावात्तेषां वर्णानामेवार्थप्रत्यायकत्वा इति वाच्यम्। वर्णाः समस्ता व्यस्ता वा अर्थबोधका इति विकल्पोप हतत्वेन तेषां वाचकत्वाभावात्।

सामस्तानां वर्णानामाशुविनाशितया दुरुपपादनीयत्वात्। वैयस्त्या एकैकवर्णाकर्णने सत्यर्थप्रत्ययस्यानुत्पादेन व्यभिचरितत्वात्। तथा स वर्णानामाशु विनाशितया "इको यणचि" इत्यादिशास्त्रोपयोगिनः, "अ पूर्वोऽयं पर" इति प्रत्यक्षविषयेदंशब्दघटिताभिलापाभिलप्यमानपौर्वाप

ज्ञानस्यासम्भव आपद्येत, नष्टस्य प्रत्यक्षविषयस्येदंशब्देन परामर्शायोगात्, तथा च शास्त्रप्रक्रियोच्छेदप्रसङ्गः स्यात् ।

अपरञ्च "परः सन्निकर्षः संहिता" इति सूत्रोक्तभाष्यकृदनुभवसिद्धस्य क्रमावगाहिनः पदप्रत्यक्षस्याप्यनुपपत्तिः प्रसज्येत, वर्णानामुच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् । न च वर्णानामुच्चरितप्रध्वंसित्वमेव कुत इति वाच्यम्, उत्पत्तिवादे व्यक्तिवादे वा क्षणस्थायित्वेनोच्चरितप्रध्वंसित्वस्य स्फुटत्वात् ।

न च क्षणस्याप्रत्यक्षत्वाद् वर्णप्रत्यक्षमपि न स्यादिति वाच्यम्, वर्णोच्चारणाधिकरणकालस्यैव क्षणशब्देन ग्रहणात् तस्य च प्रत्यक्षतया वर्णप्रत्यक्षस्योपपत्तेः ।

न चैवमपि वर्णानां प्रत्यक्षं न स्यात्, उच्चारणाधिकरणकाल-वृत्तिध्वंसप्रतियोगित्वस्यैवोच्चरितध्वंसप्रतियोगित्वात् इति वाच्यम्, उच्चारणाधिकरणकालोत्तरकालवृत्तिप्रध्वंसप्रतियोगित्वस्यैव तत्त्वाभ्युपगमेनादोषात् । न च पदप्रत्यक्षोपपत्तये, पौर्वापर्यज्ञानोपपत्तये च, पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिरभ्युपगम्यते, तेन न तथोच्चरित-प्रध्वंसित्वलाभ इति वाच्यम्, "यावद् गकारे वाग् वर्तते न तावदौकारे" इति, येनैव यत्नेनैको वर्ण उच्चार्यते, तेनैव विच्छिन्ने तस्मिन् वर्णे, उपसंहृत्य तं यत्नं, अन्यं यत्नमुपादाय द्वितीयः प्रवर्तते, इति च तत्रैव भाष्येऽभिहितमिति स्वीकारेणादोषात् ।

न च अव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्वमुत्तरवर्णप्रत्यक्षकाले संस्कारवशाद् गृह्यते, एवं तदुत्तरवर्णप्रत्यक्षकाले संस्कारोपस्थित-विशिष्टो यो वर्णस्तद्वत्वं तृतीयवर्णे गृह्यते, तेन च पदप्रत्यक्षं, पौर्वापर्य-ज्ञानं, सरो रसो नदी दीन इत्यादौ विशेषश्च सुलभ इति वाच्यम्, अयं पूर्वोऽयं पर इति पौर्वापर्यज्ञानस्यासम्भवात्, नष्टाविद्यमानयोर्व्यवहितोत्तर-त्वस्य सम्बन्धताया वक्तुमशक्यत्वात्, अव्यवहितोत्तरत्वस्य तद्घटितसन्नि-वेशापेक्षत्वात् । उक्तरीत्या पदप्रत्यक्षोपपत्तावपि पदस्यासत्वेन वृत्त्या-श्रयत्वानुपपत्तेश्च ।

न च अविद्यमानस्यापि पदस्य वृत्त्याश्रयत्वमनुमन्यतामिति वाच्यम्, तथा सति नष्टो घटो जलवानित्यस्यापि प्रमात्वापत्तेः । अविद्यमानयोरपि जलघटयोराश्रयतानिरूपकत्वस्य, आश्रयत्वस्य चाविद्यमानेऽपि सत्त्वेन पूर्वप्रयोगप्रामाण्यस्यापाद्यमानत्वात् ।

ईदृशापत्त्या, प्रसङ्गेऽभ्युपगतस्य, शब्दजशब्दन्यायेन, वीचितरङ्ग-न्यायेन वा पदप्रत्यक्षस्य पौर्वापर्यज्ञानस्य च समाधानस्य, सर्वथाऽसंभवो

भाति, पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्य दुरुपपादनमपि प्रतीयते ।

अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेदित्येवं हरिणाप्यभिहितत्वात् तदपि वज्रलेपायत एव ।

अन्यच्च—संस्कारवशादिति पक्षे, शब्दजशब्दन्यायपक्षे च "एकं पदमिति बुद्धेः" तदेवेदं कृष्णपदमिति बुद्धेश्चानुपपत्तिः, क्रमशस्तादृशसमुदायस्याभावात्, भिन्नानेकशब्दस्य सत्त्वेन तदेवेत्यंशस्यासत्त्वात् ।

न च "घकार-टकारयोर्भेदेऽपि घकार-टकारबुद्ध्योरेकजातीयत्वात् एकपदत्वव्यवहारः, एवं दिनभेदेनोच्चारितयोर्घटपदयोरेकजातीयबुद्धिविषयत्वेन तदेवेदमिति व्यवहारश्चोपपन्नौ" इति वाच्यम्, तज्जातीयमिदं पदमिति व्यवहारस्याप्यापत्तेः । न च तादृशो व्यवहारः स्वीकृत इति वाच्यम्, तदेवेदं पदमित्यस्यैव नियमेन व्यवहारात् । एकबुद्धिविषयत्वोपाधिनोक्तव्यवहारोपपादने "एको घटः स्थूलः" "एकः पटः" इत्यादावपि एकैकजातीयबुद्धिविषयत्वोपाधिनोक्तव्यवहारोपपत्तौ सत्यामवयवादतिरिक्तस्यावयविनः सिद्ध्यनापत्तेश्च ।

किञ्च पक्षद्वयेऽपि पदानामानन्त्येन एकत्र शक्तिग्रहेऽपरत्र शक्तिग्रहाभावाद् बोधो न स्यात्, वृद्धव्यवहारस्थघटपदस्य तादृशशक्तिमत्त्वेन ज्ञानेऽपि परत्र प्रयुक्तस्य तद्भिन्नतया शक्तिमत्त्वेन ज्ञानाभावात् ।

एवञ्च व्यक्तिवाद इवानन्त्यव्यभिचारयोश्च प्रसक्तिरापद्येत ।

ननु यत्र पदे शक्तिग्रहस्तस्मादेव बोध इति नास्ति व्यभिचार इति चेन्न, यत्र यत्र गृहीतशक्तिकत्वं तत्र तत्र बोधजनकत्वमिति बोधजनकत्वनिष्ठव्यापकतानिरूपिता व्याप्यतागृहीतशक्तिकत्वे सर्वसम्मता, सा च पदानामानन्त्ये एकत्र घटपदे गृहीतशक्तिकत्वे इतरत्रापि बोधदर्शनेन तत्र च गृहीतशक्तिकत्वाभावेन व्याहन्येतेति स्वीकारेण दोषस्य तादवस्थ्यात् ।

ननु तत्तत्पदगतशक्ततावच्छेदकीभूतानुपूर्व्या ऐक्येन तस्या एव शक्तिनियामकतया पदानामनुगमान्नोक्तदोषद्वयमिति चेन्न । स्वकालोत्तरकालिकत्वात्मकानुपूर्व्यास्तत्तत्कालघटितत्वेन कालभेदात् स्वोत्तरत्वस्यानुगमाभावादानुपूर्व्या अनैक्येन दत्तदोषस्य पुनरपि तादवस्थ्यात् ।

न च कालभेदेऽपि तज्जातीयाव्यवहितोत्तरत्वेन वक्तुमनुगमस्य शक्यत्वेन दोषाभाव इति वाच्यम्, तज्जातीयाव्यवहितोत्तरत्वस्यैकस्य दुर्वचत्वेन दोषस्य सद्भावात् ।

ननु व्यवधानाभावे सति घटज्ञानध्वंसविशिष्टज्ञानविषयत्वमेवानुपूर्वी, तत्परिच्छेदश्च मनसैव, तस्याः कालाघटितत्वेन नायं दोष इति चेन्न, ज्ञानव्यक्तिभेदेनानुपूर्व्या आनन्त्येनानुगमाभावस्य सत्त्वात् ।

न च चरमवर्णज्ञानव्यङ्ग्यास्तत्तत्पदवृत्तयोऽनन्ता जातयः शक्ततावच्छेदकत्वेन, कारणतावच्छेदकत्वेन च कल्प्यन्तेऽतो न दोष इति वाच्यम्, पूर्वोक्तपद्धत्या पदानामसत्वेन तत्र जातेरपि असत्वात्।

न च वर्णा एव बोधकास्त एव वृत्त्याश्रयाः, सङ्कलनाज्ञानस्यैकस्य सदसद्वर्णगोचरत्वेन तद्रूपारूढत्वस्य वर्णानां सत्वात् इति वाच्यम्, तथाविधज्ञानोत्पत्तौ कारणाभावेन सङ्कलनाज्ञानरूपसमाधानस्य कर्तुमशक्यत्वात्।

न च इन्द्रियस्य संस्कारस्य च सत्वेन कारणसद्भाव इति वाच्यम्, इन्द्रियेऽतीतवर्णग्रहणसामर्थ्याभावस्य, संस्कारे वर्तमानग्राहित्वाभावस्य च सत्वेनोभयोः कारणत्वाभावात्।

न च पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यवर्णः प्रत्यायक इति वाच्यम्, संस्कारस्य स्मृतिजनकत्वेनार्थप्रतीतिजनकत्वाभावस्य सिद्धान्तितत्वात्। न च स्मृतिद्वारेणार्थप्रत्यायकत्वं संस्कारस्याभ्युपगम्यत इति वाच्यम्, अन्त्यवर्णज्ञानानन्तरं पूर्ववर्णस्मरणस्येव समयस्मृतेरप्यापाद्यमानत्वेन ज्ञानयौगपद्यप्रसङ्गात्। न च क्रमोत्पादे किञ्चित् कारणमुत्पश्यामः, चेत् क्रमेणोत्पादो ज्ञानस्याभ्युपगम्यते, तदा तदानीमन्त्यवर्णज्ञानमुपरतमिति कस्य साहायकं पूर्ववर्णस्मृतिर्विदधातीति स्वीकारेण तथा वक्तुमशक्यत्वमिति।

अपरञ्चानेकपूर्ववर्णविषयामेकां स्मृतिमभ्युपगम्योक्तं तत्कल्पम्, न चैका सर्ववर्णगोचरा स्मृतिरिति स्मृतिद्वारेण समाधानन्नातिमनोमोदमुत्पादयितुमीष्टे।

एवं पूर्वप्रदर्शितपथेन वर्णात्मकशब्दानां वृत्त्याश्रयत्वाभावे व्यवस्थापिते वृत्त्याश्रयः शब्दः स्फोटात्मक एव शाब्दबोधमुत्पादयति। तत्तद्वर्णादिभिर्व्यक्त एव स्फोटः शाब्दप्रमामुत्पादयतीति शाब्दिका वदन्ति।

स स्फोटात्मकः शब्द एको नित्यः शब्दसृष्टिप्रक्रियानिर्वाहाय कल्पितचतुर्विधवाचां मध्ये मध्यमायां वाचि यो नादांशः स एव। न च वर्णातिरिक्तस्य स्फोटस्यानुभवविषयत्वाभाव इति वाच्यम्, 'गौः" इति पदमेकं, "गामानय" इति वाक्यमेकमिति नानावर्णातिरिक्तैकपदवाक्यावगतेः स्फोटस्य सर्वसिद्धत्वात्।

न च एकजातीयबुद्धि-ग्राह्यत्वोपाधिनोक्तव्यवहारोपपत्तिरिति वाच्यम्, तज्जातीयमिदं पदमिति व्यवहारापत्तेः, तदेवेदं पदमिति व्यवहारासिद्धेश्च।

तस्मादबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासानुभवो वर्णातिरिक्तमेकमेव वाचकमवलम्बते स स्फोटः।

तत्र ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागेव विशदयन्ति, येनाशुप्रत्ययः स्यात्, अपि तु रत्नतत्त्वज्ञानवत् पूर्वपूर्ववर्णेनाव्यक्तावभाससत्त्वेऽपि चरमवर्णेनाभिव्यक्त एव बोधको भवति स्फोटः।

न च स्फोटप्रत्ययवत् प्रत्येकमव्यक्तामेवार्थधियमुत्पादयन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सहितः स्फुटतरामिति वाच्यम्, व्यक्ताव्यक्तभासितायाः प्रत्यक्षज्ञाननियतत्वात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात्, अर्थप्रत्ययस्य च प्रत्यक्षत्वातिरिक्तत्वेन तत्र व्यक्ताव्यक्तभासितायाः स्वीकाराभावात्।

स्फोटत्वन्नाम—स्फुटति-व्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्याऽर्थप्रकाशकत्वम्, प्रकाशश्च ज्ञानमेव। एवञ्च अर्थविषयकबोधप्रयोजकत्वं स्फोटत्वं सिद्ध्यति। न च तथाविधस्फोटत्वाङ्गीकारेऽर्थविषयकबोधप्रयोजकत्वस्य कालादीनामपि सत्वात् स्यादतिप्रसङ्ग इति वाच्यम्। अर्थविषयकबोधप्रयोजकज्ञानविषयत्त्वस्य स्फोटत्वस्वीकारेण कालादिषु अतिप्रसङ्गाभावात्, कालादेर्ज्ञानस्य कार्यमात्रं प्रति हेतुत्वाभावेन स्वरूपतो हेतुत्वस्य सत्वादुक्तस्फोटत्वस्यानतिप्रसङ्गात्। न च तथोक्तावपि शक्तियोग्यतयोरपि अतिप्रसङ्गापत्तिः, तयोर्ज्ञानस्यार्थविषयकबोधप्रयोजकतया तादृशज्ञानविषयत्वस्योभयत्र सत्त्वात् इति वाच्यम्, अर्थनिष्ठविषयताप्रयोजकशक्तिमत्वरूपस्फोटत्वस्वीकारात्।

ननु स्फोटस्य तथात्वे घटपदाभिव्यक्तस्फोटस्य पटपदाभिव्यक्तस्फोटस्य चैकत्वेनोक्तस्फोटत्वस्योभयत्र सत्वेन "घटपदं घटनिरूपितशक्तिमत्" इति व्यवहारवत् "घटपदं पटनिरूपितशक्तिमत्" इत्येतादृशव्यवहारापत्तिरिति चेन्न, स्वजन्याभिव्यक्तिविषयत्वसम्बन्धेन घटपदविशिष्टत्वावच्छेदेन "घट पदं घटनिरूपितशक्तिमत्" इति व्यवहारस्वीकारात्, तादृशव्यवहारस्य च तादृशसम्बन्धेन घटपदविशिष्टत्वावच्छेदेनैव शक्तिमत्वावगाहित्वाङ्गीकारात्।

शब्दविदो वैयाकरणा वाचकतया द्वौ शब्दौ विदन्ति तत्रैकः श्रोत्रग्राह्यवैखरीरूपः स्फोटस्य प्रकाशकः, तेन स्फोटः प्रकाश्यते, न तूत्पाद्यते, तस्य ब्रह्मरूपतया नित्यत्वात्। अपरः स्फोटात्मकः शब्दोऽर्थबोधनक्षमो भवति, वैखरीवागात्मकः शब्दः श्रोत्रगृहीतोऽपि नार्थं साक्षाद् बोधयति, अपितु हृदयदेशस्थितस्य स्फोटस्य प्रकाशनद्वाराऽर्थमवगमयति, मध्यमावागात्मकस्फोटश्च नादाभिव्यङ्ग्यः साक्षादवगमयति अर्थम्, यथा पक्षिणा-

मण्डोऽवयवादिविहीन एकरूपेण स्थितः प्राक् परिलक्ष्यते, पश्चादुद्भिन्नः स एवावयवादिमान् लोके लक्ष्यते, तथैव स्फोटशब्दो हृदयदेशस्थितोऽवयवादिशून्योऽपि वक्तुः प्रयत्नेन विवृद्धो ध्वनिधर्मरूषितः सन् परश्रवणगृहीतोऽवयवादिमान् पौर्वापर्यक्रमवांश्च नादो भवति, परेण श्रुतः स हृदि स्थितं स्फोटमभिव्यञ्जयति, ततोऽर्थबोध इत्यस्ति शाब्दिकानां समयः। अनेन नादस्य प्रकाशकता, स्फोटस्य च प्रकाश्यता स्फुटं प्रतीयते, तेन स्फोटनादयोः प्रकाश्यप्रकाशकभावोऽवि सिध्यति । यथा जले जायमानमंशुमालिनः • प्रतिच्छायं स्वतोऽक्रियमपि तोयक्रियावशाज्जलकम्पादिकारणात् कम्पादिक्रियामन्वेति तथा ध्वनिभिर्व्यज्यमानो ध्वनिगतह्रस्वत्वदीर्घत्वादिधर्मवत्तया भेदवानिव नानारूपः प्रतीयते स स्फोटः, तेन ध्वनिधर्मानुविधायित्वमपि तत्राभ्युपगम्यत एव । अतो नार्थबोधसङ्करः। अन्यथैकस्य स्फोटस्यार्थबोधकत्वे घटशब्देन पटस्यावबोधोऽपि आपतेत् ।

एवञ्च स्फोटस्य नादाभिव्यङ्ग्यत्वे ध्वनिधर्मरूषितत्वे च शब्दशास्त्रेण शब्दानां साधुत्वबोधनात् संस्कृतेन साधुशब्देन विशुद्धेऽन्तःकरणे विशुद्धं शब्दब्रह्माभिव्यज्यतेऽतः साधुशब्दसंस्कारः शब्दब्रह्मसाक्षात्काराय महानुपायभूतोऽभ्युपगतः। प्रतिपुरुषमवस्थितः सर्वान्तर्यामी सर्वशक्तिमान् परमेश्वर एव स्फोटोऽभिमतः, परमेश्वरात्मनः, संस्कृतशब्देनाभिव्यक्तस्य, तस्य स्फोटस्य साक्षात्कारेण मोक्षत्वरूप सायुज्यस्यावाप्तिश्च स्वीकृतेति बोध्यते अग्रिमेण हर्युक्तेन श्लोकद्वयेन—

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहु महान्तमृषभ येन सायुज्यमिष्यते ॥ १ ॥**
**तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।**
**तस्य प्रवृत्ति तत्वज्ञः ब्रह्मामृतमश्नुते ॥ २ ॥**

तथा च परमात्मनः प्राप्तये साधनीभूतः शब्दशास्त्रेण सञ्जातः शब्दसंस्कारः परम्परया मोक्षाख्यसायुज्यसम्पादनायास्ति समर्थ इति शाब्दिकानां सिद्धान्तः स्फुटमुपपद्यते ।

एवञ्च स्फोटः साक्षात्कृतः परमपुरुषार्थस्य मोक्षस्योत्पादकः, 'तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितमिति हर्युक्त्या तथागवमस्य सिद्धत्वेन शाब्दिकानां स्फोटात्मकशब्दब्रह्मसाक्षात्कारः परमपुरुषार्थप्रद इति मतमनुमतम् ।

ननु शब्दागमज्ञानद्वारा शब्दतत्त्वात्मकब्रह्मतत्त्वसाक्षात्कारः परम-

पुरुषार्थम् प्रसूत इति कथनमविचारितरमणीयम्, व्याकरणस्य शब्दसाधुत्वसम्पादकत्वात् शब्दस्य च प्रत्यक्षाद्यतिरिक्तप्रमाणत्वानभ्युपगमेन ततो विजातीयबोधोदयासम्भवादिति चेन्न, शब्दसमुत्पादितप्रत्ययस्य क्लृप्तप्रमितिषु सन्निवेशासम्भवात्, तथा हि शब्दजन्यं ज्ञानं प्रत्यक्षप्रमायामन्तर्भावयितुं शक्यम्, शब्दजज्ञानस्य तथात्वे पदानुपस्थितानामप्यर्थानां तत्र भानस्य निर्बाधप्रसङ्गात्, नैष च प्रसङ्ग इष्टतया शक्यसमाधानः, पदानुपस्थाप्यार्थविषयकत्वेन शब्दजज्ञास्यानुव्यवसायप्रसक्तेः। एषा प्रसक्तिश्च तदर्थविषयकशाब्दबोधनिष्ठविषयतासम्बन्धेनानुव्यवसाये तदर्थसाकाङ्क्षपदजन्यतदर्थविषयकशाब्दबोधस्य तादात्म्येन कारणत्वस्वीकारेणापि वारयितुं न शक्या, अभिनवकार्यकारणभावकल्पनप्रयुक्तगौरवक्लेशस्य कथमपि कोविदैः सोढुमशक्यत्वात्। घटेन जलमाहरेति वाक्यजनितशाब्दबोधस्य घटे सच्छिद्रेतरत्वमवगाहमानस्य न जन्यस्य च सच्छिद्रेतरत्वसाकाङ्क्षपदेन सच्छिद्रेतरत्वविषयकत्वेनानुव्यवसीयमानतया व्यभिचारसञ्चारभयेन तथाविधहेतुहेतुमद्भावकल्पनाया असम्भवाच्च। "घटोऽस्ति" इत्यादिवाक्यात् प्रयोजकविशेषवैधुर्येणास्तित्वेन घत्वस्येवाधेयतया घटप्रकारेणास्तित्वस्यापि बोधप्रसङ्गाच्च।

सिद्धान्ते तु तादृशाकाङ्क्षाज्ञानस्यास्तित्वप्रकारकघटविशेष्यकशाब्दं प्रत्येव कारणत्वाभ्युपगमेन न दोषः।

न च शब्दजज्ञानस्य प्रत्यक्षकुलेऽन्तर्भावाभ्युपगमे शब्दप्रयोज्यप्रतीतौ पदानुपस्थाप्यार्थवर्गस्य भानप्रसङ्गो न शङ्कास्पदः, तत्तदर्थविषयकशाब्दज्ञानं प्रति पदप्रयोज्यतत्तदर्थस्मरणस्य कारणत्वकल्पनादिति वाच्यम्, तथात्वेऽपि शब्दजज्ञानकाले प्रकारान्तरतः उपस्थितिदेशमासादितानामप्यर्थानां निजसामग्रीसाहाय्यात् प्रत्यक्षप्रसवप्रसक्तेः दोषश्चायं न शक्यशोषः, प्रत्यक्षत्वावच्छिन्ने शाब्दसामग्र्या बाधकत्वकल्पनया, भवन्मते शब्दजज्ञानस्य प्रत्यक्षात्मकतया तस्यापि प्रतिबध्यतावच्छेदकाक्रान्तत्वेन पदोपस्थाप्यार्थविषयकस्यापि शब्दजज्ञानस्यानुपपत्तिप्रसङ्गात्, प्रतिबध्यतावच्छेदककोटौ शब्दजज्ञानभिन्नत्वप्रवेशसम्भावना च गौरवेण सुदूरं पराहता, तथा कल्पनायामाद्रियमाणायाञ्च शब्दजज्ञानस्य प्रत्यक्षातिरिक्तत्वस्वीकारे प्रत्यूहापायात्।

न च शाब्दज्ञानस्य लिङ्गज्ञानजन्यत्वेनानुमितित्वसिद्धौ पदानुपस्थाप्यानां परामृश्यमानार्थानां शब्दजज्ञाने भानवारणाय तत्तदर्थगोचरशाब्दजज्ञाने पदप्रयोज्यतत्तदर्थस्मरणस्य कारणत्वकल्पनेन, शब्दजज्ञानका

पदानुपस्थाप्यार्थानां परामृश्यमानानामनुमितिवारणाय शाब्देतरतत्तद-र्थानुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनेन च, सामञ्जस्ये शब्दज-ज्ञानस्य क्लृप्तप्रमितिव्यतिरेककल्पनं निष्फलमेवेति वाच्यम्, शब्दजज्ञाने लिङ्गज्ञानजन्यत्वस्यासिद्धतया तन्मूलकतत्तत्कल्पनाया अवसरावतार-स्यासम्भवात्। तथाहि घटोऽस्तीति वाक्यश्रवणानन्तरं जायमाना घटे-ऽस्तित्वबुद्धिर्नाकांक्षात्मकलिंगज्ञानजन्या पक्षभूते घटे शब्दनिष्ठाया आकाङ्क्षाया अविद्यमानतया हेत्वसिद्धिप्रसङ्गात्।

नापि योग्यतात्मकलिङ्गज्ञानजन्या विशिष्टबुद्धिसामान्यं प्रति बाध-निश्चयस्य प्रतिबन्धकत्वेन तदभावस्य विशिष्टबुद्धिसामान्यजन्मन्यपेक्षणाद् बाधनिश्चयसमये शाब्दज्ञानापत्यसम्भवेन तत्र योग्यतानिश्चयस्यान-पेक्षणीयत्वात्। शब्दजन्यज्ञानस्य योग्यतामात्रलिङ्गकत्वस्वीकारेण तत्रा-काङ्क्षाज्ञानादीनामनावश्यकतया घटः कर्मत्वम् आनयनं कृतिरितिपद-कदम्बकेनापि घटमानयेत्यादिवाक्येनेव घटनिष्ठकर्मताकनयनधार्मिक-कर्तव्यत्वप्रकारकशाब्दबोधप्रसङ्गात्। योग्यतासंशयेनापि शाब्दबोधस्या-नुभविकतया तस्य योग्यता लिङ्गकत्वासम्भवात् अनुमितौ लिङ्ग-निश्चयस्यैव जनकत्वात्।

घटोऽस्ति तावान् स्वविशेष्यकास्तित्वप्रकारकबोधानुकूलाकाङ्क्षा-विशिष्टपदस्मारितत्वात् पटवत् इत्येवमनुमित्यापि शाब्दस्य गतार्थत्वं न सन्देहनीयम्, पक्षे तादृशपदस्मारितत्वाभावनिश्चयदशायामपि सर्वानुभव-साक्षिकस्य घटेऽस्तित्वान्वयबोधस्यापलापप्रसङ्गात्। पदेन घटस्मरण-विरहकालेऽपि तादृशपदस्मारितत्वनिश्चयेन तथाविधबोधापत्तेश्च।

नापि घटपदात्मके धर्मिणि अस्तिपदसमभिव्याहृतघटपदत्वहेतुना-ऽस्तित्ववद्घटविषयकज्ञानपूर्वकत्वविधेयकानुमित्या घटोऽस्तीति वाक्य-जाताया धियो गतार्थता सम्भावनीया, घटपदे तादृशज्ञानपूर्वकत्वाभाव-निर्णयकाले समुत्पन्नाया घटेऽस्तित्वबुद्धेस्तादृशानुमित्यात्मकत्वासम्भवात्, साध्यस्य वाक्यार्थघटितत्वेनापूर्ववाक्यार्थस्थले साध्यस्य पूर्वमुपस्थित्य-सम्भवेन परामर्शासम्भवात् तादृशानुमित्युत्पत्तेः कथमप्यसम्भावनीयत्वात्। किञ्च शब्दजन्यज्ञानस्य प्रमाणान्तरेणानुमितित्वसिद्धावेव तस्य लिङ्गज्ञान-जन्यत्वं कल्पनीयं तदेव च साम्प्रतमसिद्धं समुचितसाधकवैकल्यात्, अन्यथा शाब्दज्ञाने लिङ्गज्ञानजन्यत्वेन निजकल्पितेनानुमितित्वसाधनवत् अनुमिता-वपि पदज्ञानजन्यत्वं प्रकल्प्यतेनानुमितौ शाब्दत्वं प्रसाध्यानुमितेरेव जगतो वियोगः कथं न रोचयेत्।

न च घटोऽस्तीति वाक्यज्ञानस्य परस्तात्तत्तदर्थस्मरणमेव स्वीक्रियते

न तु विशिष्टबोध इति वाच्यम्, तदनन्तरमस्तित्वेन घटं शाब्दयामीत्यनुव्यवसायेन विशिष्टबोधस्यैव विषयीक्रियमाणत्वात्। तदनन्तरं घटेऽस्तित्वसन्देहस्यानुत्पद्यमानत्वाच्च।

नापि तादृशबोधः समानविषयकविशिष्टस्मृत्या गतार्थयितुमर्हः, समानाकारसंस्कारशून्यस्यापि पुंसस्तथाविधबोधस्यानुभवसिद्धत्वात्।

तथा च प्रत्यक्षादिप्रमितिषु शाब्दप्रमायाः सन्निवेशासम्भवेन प्रत्यक्षाद्यतिरिक्तशाब्दप्रमाप्रयोजक एव शब्दोऽतिरिक्तप्रमाणत्वेनाभ्युपेतव्यः। तेन च शब्दागमज्ञानद्वारा ब्रह्मतत्त्वाऽऽत्मकशब्दतत्त्वसाक्षात्कारः परमपुरुषार्थं प्रसूत एवेति कथनं सम्यगेवेति निश्चितम्।

ननु स्फोटस्यैकत्वे नित्यत्वे चैकमेव शब्दतत्वं ब्रह्म, तदा नानारूपेण कथं ज्ञायते? इति चेन्न, नानाशक्त्याश्रयेण शब्दब्रह्मणि नानात्वप्रतीत्युपपत्तेः। शक्तेर्नानात्वेन तदाश्रयशब्दब्रह्मणोऽपि नानात्वारोपस्याभ्युपगमात्।

ननु शक्तिर्भिन्ना तदाश्रयः शब्दब्रह्मापि भिन्नम्, तदा कथमेकं शब्दब्रह्म इत्यभ्युपगम्यत इति चेन्न, शक्तिभ्यो ब्रह्मणोऽपृथक्त्वेऽपि पृथक्त्वमारोप्यत एव, न तु वास्तविकभिन्नतेति स्वीकारेणादोषात्।

तथाहि—घटत्वेन शरावत्वेन च घटशरावादयो भिन्ना अपि मृत्तिकारूपेणाभिन्ना एव, एवं विकारो विकारो यावद्वस्तु परस्परं भिन्नमपि सर्वस्योपादानकारणं ब्रह्म एकमेवातस्तेन रूपेण सर्वमेकमेव। ननु एकञ्चेद् भिन्नं कथं एकस्मिन् भेदस्य बाधात् इति चेन्न, एकस्मिन्नपि ब्रह्मणि नानाशक्तिसमावेशात् शक्तिगतभेदस्य ब्रह्मणि आरोपेऽपि स्वकीयैकत्वस्य वास्तविकस्याबाधेन एकत्वभिन्नत्वोभयव्यवहारस्योपपत्तेः, यथा एकस्मिन् ज्ञाने घटः पट इत्याद्यनेकविषयस्य भानेऽपि विषयगतनानात्वेन ज्ञानगतैकत्वस्य न बाधः, करः कमलः इत्यादौ च करे कमलत्वारोपेऽपि वास्तविककरत्वस्य न बाधः, तथा ताः शक्तयोऽपि नहि ब्रह्मणो भिन्नाः (पृथक्) तासां तत्रैवोपलब्धेरन्यत्रानुपलब्धेश्च, शक्तिशक्तिमतोरभेदात्, किन्तु पृथगिवाविवेकिनां लभ्यत इति स्वीकारेण दोषस्य समाधेयत्वात्।

एष स्फोटः प्रतिनियतव्यञ्जकाभिव्यक्त एवार्थं प्रत्याययति, उक्तं हि प्रतिनियतव्यञ्जकाभिव्यक्तत्वं वाक्यपदीये —

**ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा।**
**व्यङ्ग्य-व्यञ्जकभावेन तथैव स्फोट-नादयोः॥**

तस्य च शुद्धस्य स्फोटस्य निरुपाधिकस्य ब्रह्मण इव ज्ञानाविषयत्वमेवेति वर्णपदादिरूपरूषितस्यैव ज्ञानविषयता, अर्थविषयकबोधजनकता चेति वर्णपदादिभ्यः पार्थक्येनोपलब्धिविषयत्वाभावेऽपि न क्षतिः। ब्रह्मात्मकस्य तस्यैकत्वेऽपि व्यञ्जकवर्णद्यात्मकध्वनीनामानन्त्यादानन्त्यम्।

अयं स्फोटो यद्यप्येकोऽखण्ड एकैकवर्णेनाभिव्यज्यते, तथापि रत्नपरीक्षणरीत्याऽन्त्यवर्णाभिक्त एव शाब्दप्रत्ययोत्पादकोऽतो नैकवर्णजाभिव्यक्त्युत्तरमर्थप्रत्ययः।

ननु स्फोटस्यैकत्वेन सकृदभिव्यक्तात् सर्वार्थबोधापत्तिरिति चेन्न, जलचाञ्चल्येन चन्द्रप्रतिम्बिबस्य चञ्चलत्वेन ग्रहणवत्, जपाकुसुमाद्युपाधिवशात्तद्रूपरूषितस्य स्फटिकादेर्भानवत्, मणि-कृपाण-दर्पणाद्यभिव्यञ्जकवशात् मुखे दैर्घ्यवर्तुलत्वादिभानवद्वा एकस्मिन्नपि स्फोटे वाचकवर्णादिरूपप्रतिबिम्बनात्तद्रूपरूषितैव स्फोटाभिव्यक्तिरित्येकोऽपि नानात्वमिवापन्न इत्यभ्युपगमेन दोषाभावात्।

ननु स्फोटेषु ध्वनिरूपप्रतिबिम्बनासम्भवः, प्रयोजकाभावादिति चेन्न, स्थिरस्यान्तः करणसंस्कारस्यैव प्रतिबिम्बप्रयोजकतया सत्वात्। न च तत्तत्कालिकतत्तद्वैखरीरूपव्यञ्जकभेदेन स्फोटस्य नानात्वात् तदनुगमाय स्फोटवादिनामपि तत्र जातिकल्पनास्वीकारेण लाघवाभाव इति वाच्यम्, सहस्रदीपाभिव्यक्तपटस्येव अनेकजपाकुसुमाभिव्यक्तस्फटिकस्येव च, स्वतो नानात्वाभावात्।

ननु जपाकुसुमाद्युपाध्यभावेऽपि स्फटिकस्य बोधवत् केवलस्य स्फोटस्य बोधप्रसङ्ग इति चेन्न, स्फोटस्योपाधिभिन्नव्यञ्जकाभावान्न कदापि वर्णराहित्येन तत्प्रत्यक्षमिति स्वीकारेणादोषात्।

ननु वर्णानां व्यञ्जकत्वे रसः सरः, इत्यादौ तुल्यानामेव व्यञ्जकानां सत्त्वेन पर्यायतापत्तिरिति चेन्न, संस्कारस्यापि सहकारित्वेन येन क्रमेणान्तःकरणे संस्कारस्तेनैव क्रमेण व्यञ्जकरूपरूषितत्वस्वीकारात्। ननु एवमपि तेषां समेषां कालैक्येन क्रमानुपपत्तिरिति चेन्न, प्रतिबिम्बे तदुत्तरत्वग्रहस्य चित्तरूपदेशकृतत्वे नैकदेशस्थ-घटपटादिवत्पौर्वापर्यसम्भवात्।

ननु घटाकार-स्फोटस्याभिव्यक्ते सत्त्वादस्तु सर्वदाऽर्थबोधप्रसङ्ग इति चेन्न, अर्थाकारवृत्त्यतिरिक्तवृत्तौ सत्यां तत्प्रतिबिम्बनाशस्याभ्युपगमेन दोषाभावात्। ननु एवमपि पर्यायवाचकशब्देषु एकः स्फोटो नाना वा, नानेति चेन्न, अनन्तानां तेषां तेषु शक्तीनाञ्च कल्पनामपेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघीयस्त्वात्। एकः स्फोट इति चेन्न, घटकलशादि-

पर्यायवाचकाभिव्यक्तेः स्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धतत्पदश्रवणेऽप्यर्थप्रत्ययापत्तेः। प्राग् गृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यञ्जनात्।

न च तत्तत्पर्यायवाचकाभिव्यक्तस्फोटे शक्तिग्रहस्तत्तत्पर्यायवाचकशब्दश्रवणेऽर्थबोधहेतुरिति वाच्यम्, एवं हि प्रतिपर्यायवाचकं शक्तिग्रहावश्यकत्वे तत्तत्पर्यायवाचकगतशक्तिग्रहहेतुताया एव युक्तत्वात्। स्फोटवादिनये तु तत्तत्पर्यायवाचकाभिव्यक्तगतशक्तिग्रहत्वेन हेतुत्वे गौरवात्। न चैतद्वक्तव्यम्, पर्यायस्थलेऽपि एकस्यैव स्फोटस्य बोधोपयोगित्वात्। न च घटकलशपर्यायाभिव्यक्तस्यैकस्यैव स्फोटस्य सत्त्वे एकपर्यायावच्छेदेन गृहीतशक्तिकस्य पुंसोऽपरपर्यायाभिव्यक्तस्फोटादर्थप्रत्ययापत्तिरिति वाच्यम्, व्यञ्जकरूपरूषित एव स्फोटे शक्तिग्रहनियमात्, तत्र शक्तिज्ञानरूपकारणाभावादेव शाब्दबोधाभाव इति स्वीकारेणादोषात्।

अयञ्च स्फोट आन्तरो बोधहेतुः, एतस्यान्तरस्य बोधकत्वेऽपि वैखरी वाक्संस्कृतान्तःकरणग्राह्यत्वान्न श्रोत्रग्राह्य वैखरीं बिनोपलब्धिः।

ननु वर्णानां क्षणिकत्वे स्फोटस्य नित्यत्वे च पौर्वापर्यानुपपत्त्या बहुशास्त्रवैयर्थ्यापत्तिरिति चेन्न **"बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः। शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम्"** इति भाष्येणैव समाधानात्।

ननु स्फोटस्य वर्णाभिव्यङ्ग्यत्वे वर्णानां वैयस्तसामस्त्यविकल्पोपहतत्वेन नात्र पक्षेऽपि पूर्वाभिहितदोषसमुद्धार इति चेन्न, स्फोटाभ्युपगमवादे विकल्पानवकाशस्यैव सत्त्वेनादोषात्। तथाहि-प्रथमवर्णश्रवणवेलायां स्फोटोऽभिव्यज्यते, न च तदा द्वितीयवर्णवैफल्यं, तदवगतेरेवातिशयकरणात्, यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपममलमप्रकाशमानमपि पुनः पुनः परीक्षमाणानां चरमे चेतसि चकास्ति निरवद्यं रत्नतत्त्वम्। एवमिहापि प्रथमवर्णश्रुत्याऽभिव्यक्तेऽपि स्फोटे स्फुटतरप्रतीत्यै वर्णान्तराणि प्रयोक्ष्यन्त इति।

न च स्फोटस्य नित्यत्वे 'इको यणचि" इत्यादौ कथं प्रकृति-विकृतिभावोपपत्तिरितिवाच्यम्, एतत्कल्पेऽपि बुद्धौ पौर्वापर्यादिप्रकल्पनया बुद्धिविपरिणामेन प्रकृतिविकृतिभावोपपत्तेः। प्रकृति-विकृतिभावेऽपि अन्तःकररणस्येकारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इतिस्थानिवत् सूत्रे भाष्यकृता स्पष्टमुक्तत्वात्।

ननु परश्रवणगोचरा वैखरी वागेव वाचिका कथन्न कल्प्यते इति चेन्न।

**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।**
**कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः ॥**

इति हर्युक्तेः पातञ्जलभाष्ये व्यासेन तथोक्तेश्च, वाय्वादिपारिणामरूपा, कण्ठताल्वाद्यभिघातजन्या सेत्यङ्गीकारात्तदनित्यत्वेन तस्या वाचकत्वाभावात् ।

अयं हि आन्तरस्फोटात्मकः शब्दस्तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः, सर्वसमष्टेर्विराजो हृदयरूप-बाह्याकाशदेशस्थश्च । स च लाघवादेक एव विभुः, यथैकत्र श्वेतद्रव्ये रूपं व्यापकं तथाऽस्यापि आकाशदेशस्थस्य विभुत्वमङ्गीकरणीयम् । "एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेष्वङ्गं भवतीति सरूपसूत्रभाष्यात् । अत्र प्रादुर्भूतपदेनाभिव्यक्त इत्यर्थोऽवगन्तव्यः ।

स एव स्फोटरूपः शब्दः कत्वादिनाऽभिव्यक्तः श्रोत्रग्राह्यः पदादिरूपेण बुद्धिग्राह्यः, प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूषितः कृतः इत्येवं "अणुदित्सूत्रे भाष्ये" श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशस्थ इत्यादिना स्पष्टीकृतम् ।

एवञ्च आकाशदेशस्थस्य व्यापकस्य स्फोटरूपस्य शब्दस्य वाचकत्वमनङ्गीकृत्य वर्णा एव शब्दा वाचका इति पक्षस्यैव कदम्बमुकुलादिन्यायेन शब्दजशब्दन्यायेन, वीचितरङ्गन्यायेन वा, स्वीकारेऽनन्तानां शब्दानां तत्प्रागभावध्वंसानाञ्च तत्प्रत्यक्षानुपपत्त्या कल्पने गौरवं स्यात् ।

ननु स्फोटात्मकशब्दस्यैकत्वेऽतिदूरस्थस्यापि प्रत्यक्षापत्तिरिति चेन्न, नैयायिकानां नयेऽतिदूरपर्यन्तं शब्दानुत्पत्तिवत् स्फोटवादिमतेऽपि अतिदूरपर्यन्तमभिव्यक्तेरभावस्य स्वीकारेणादोषात् ।

शब्दस्य व्यापकत्वादेव कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रेण तद्ग्रहः, स्वसमवेतशब्दस्यैव श्रोत्रेण ग्रहणात्, अन्यथा श्रोत्रेण तद्ग्रहोऽपि न स्यात् ।

प्रसङ्गसंगत्याऽत्र प्रसङ्गेऽयं शब्द आकाशदेशस्थो न वेति समासतो विचार्यते—

ननु आकाशदेशः शब्द इत्यसंगतम्, आकाशसत्त्वे मानाभावात् इति चेन्न, शब्दगुणितयाऽऽकाशसिद्धेः । न च स्पर्शवद् द्रव्यविशेषवायुगुणत्वस्यैव शब्दे स्वीकारेणाकाशगुणत्वासिद्धिरिति वाच्यम्, पृथिव्यादिस्पर्शवतो गुणानां स्वाश्रयमात्रवृत्तित्वेनाश्रयादन्यत्रानुपलम्भापत्तेस्तथा वक्तुमशक्यत्वात् । न च पृथिव्यादिस्पर्शवद् गुणानां स्वाश्रयमात्रवृत्तित्वमेव प्रमाणा-

भावान्न स्वीक्रियते, शब्दे गगनगुणत्ववादिनापि अन्यदेशावच्छिन्नाकाशाश्रयस्य शब्दस्य कर्णशष्कुल्यवच्छिन्ने नभसि उपलब्धिस्वीकारात् इति वाच्यम्, तथा सति द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणयोगित्वस्य स्पर्शवतामभ्युपगमेन पवनगुणत्वस्य शब्दे कल्पयितुमशक्यत्वात्।

न च तादृशनियमस्य स्ववासनाकल्पिततया तथा वक्तुमशक्यम्, श्रोत्रेण समीरणेऽग्रहणेऽपि तद्गुणस्य शब्दस्य श्रवणग्रहणे बाधाभावादिति वाच्यम्, एवं गगनगुणत्वासिद्धावपि अन्यथाऽनुपपन्नया सर्वाऽधारशक्त्यैवाकाशसद्भावस्य सिद्धत्वात्, तथा च सर्वाधारतया शब्दस्यापि आकाशदेशत्वमिति प्रसङ्गसंगतेरलं पल्लवितेन।

नभसः सर्वाधारता प्रमाणितैव वाक्यपदीयकारेण भर्तृहरिणा—

**आधारशक्तिः प्रथमा सर्वसंयोगिनामयम्।**
**इदमत्रेति भावानामभावानाञ्च कल्प्यते।**
**व्यपदेशस्तमाकाश-निमित्तन्तु प्रचक्षते।**
**कालात् क्रिया विभज्यन्ते आकाशात् सर्वमूर्तयः॥**
**एतावानेव भेदोऽयमभेदोपनिबन्धनः॥**

आकाशः काल इति भेदः, अभेदेपि भेदरहितं यद् ब्रह्म तत्कारणकं वस्तुभूतं यस्य, तादृशो व्यवहारिको भेद इत्यर्थः, कार्यमात्रं प्रति परमेश्वरस्य कारणता क्लृप्तैव, अत एव कर्णशष्कुल्यवच्छिन्नेश्वर एव तत्तदाधारत्वविशिष्टः श्रोत्ररूपेणावगतो भवतीत्यतो गगनस्य सर्वाधारता।

एवञ्चैकस्याकाशदेशस्थस्य स्फोटस्य स्वीकारे दूरदेशवर्तित्वानुभवविरोधोऽपि नैव सम्भवति, तत्तद्देशव्याप्यभिव्यक्तिमतः शब्दस्यैव श्रोत्रेण ग्रहणात्, अभिव्यक्तेरेव दूरदेशव्याप्त्यङ्गीकारेण समाधेयत्वात्।

ननु शब्दस्यैकत्वे नित्यत्वे च सत्यनेकसमवेतत्वरूपजातेरभावात् 'आकृतिग्रहणात् सिद्धमिति भाष्यासङ्गतिरिति चेन्न, यथा चैकस्याप्याकाशस्य घटाकाशो मठाकाश इत्यौपाधिको भेदः, यथा चैकस्य चेतनस्यौपाधिको जीवेश्वरयोर्भेदः, जीवानाञ्च परस्परं भेदः, एवमुपाधिरूपध्वनिगतकत्व-गत्वादिभेदस्य वर्णेष्वारोपेणोक्त-भाष्योपपत्तेः। अथवा मास्तु जातिरपि, रूपसामान्यात्—रूपसादृश्यादित्यर्थकादेव समाधानात्। न च निरवयवे नित्ये शब्दे रूपसामान्यञ्च न सम्भवतीति वाच्यम्, ध्वनिगतरूपस्य वर्णेष्वारोपेण दोषाभावात्।

यदत्र सांख्यसूत्रे प्रोक्तम्—"प्रतीत्यप्रतीतिभ्यान्न स्फोटात्मकः शब्दः"

इति, यच्चोपवर्षेणाभिहितम्—वर्णसमुदायेनाभिव्यक्तः स्फोट एव बोधकः, तदा वर्णसमुदायस्यैव बोधकत्वेनोपपत्तौ किं स्फोटेन ?। वर्णसमुदायेनानभिव्यक्त एव स्फोटो बोधकस्तदाऽज्ञातस्य स्फोटस्यार्थबोधकत्वासम्भव इति स्फोटो व्यर्थ इति च द्वयमपि पूर्वव्यवस्थापितस्फोटपक्षप्रदर्शनरीत्योपेक्षणीयम् ।

अगृहीतसम्बन्धैरपि स्फोटस्याभिव्यक्तिरस्ति, अत एवागृहीतार्थकेऽपि पदे इदमेकं पदमित्यनुभवोपपत्तिः ।

एवं स्फोटस्याभ्युपगमस्तत्त्वविन्दावपि वाचस्पतिमिश्रैरभ्यधायि—तथा हि—तत्र हि "वर्णसमुदायः पदं भवितुन्नार्हति, वर्णानामाशुविनाशित्वादित्याशङ्क्य स्यादेतदनवयवमेव हि वाक्यं वाक्यार्थस्य वाचकम्, न च वर्णा एवानुभूयन्ते न तदतिरिच्यमानशरीरमपि वस्त्विति वाच्यम्, पदमिति वाक्यमिति चानुसंहारबुद्धावभिन्नस्य वस्तुन उपारोहात् । न खल्वियं बुद्धिरभिन्नवस्तुनिर्भासा परस्परव्यतिरिच्यमानात्मनो वर्णानेव गोचरयितुमर्हति, एकत्वनानात्वयोरेकत्रासमवायात् । न च वर्णात्मनस्तत्समवायिनो वाक्यस्य कुतस्तदुपरागवती प्रख्या ? इति वाच्यम्, तदतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावात्" इत्युक्तम् । तस्यायमाशयः—वर्णातिरिक्तं पदं वाक्यं वा नोपलभ्यत इत्याशङ्क्य साहित्यावगाहिज्ञानरूपानुसंहारबुद्धौ पदमिति वाक्यमिति च प्रतीत्या वर्णाभिन्नं तत्सत्त्वमिति समाधाय पुनर्नानावर्णात्मकं पदादि भवितुन्नार्हति, नानावर्णा एकं पदमिति नानात्वैकत्वयोरेकत्र समवायस्य वक्तुमशक्यत्वात् ।

ननु वर्णात्मनो वाक्यस्य "वाक्यं" इति प्रख्या ( बुद्धिः ) कथमित्याशङ्क्य वाक्यादतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावादिति समाहितम् । अनेन स्पष्टमेव वाक्यस्फोटमतमुपन्यस्तम्, तदस्वीकारे तु वाक्याभिन्नानां परमार्थसतां वर्णानामभावादित्युक्तिः संगता न स्यादिति तत्र स्फोटस्वीकारे वेदान्तिसम्मतिरपि समागता ।

अत्रान्ये मीमांसकैकदेशिनो वाचकत्वेन वैखर्या एव वाचो बोधकत्वमभ्युपगच्छन्ति, तन्मतेऽवर्णादीनां प्रत्येकमेकत्वं, नित्यत्वं, विभुत्वञ्चाभ्युपगतम् । ननु अकारादेर्नित्यत्वे सर्वदा तदुपलम्भः स्यादिति चेन्न, कण्ठताल्वाद्यभिघातस्य तद्व्यञ्जकत्वेन तदभावान्न तदुपलम्भ इत्येवं स्वीकारेणादोषात् ।

न च वर्णानामेकत्वेऽपि न पदादेरेकत्वं, स्वकालोत्तरकालिकत्वरूपकालघटितानुपूर्वीभेदात्, तथा चानन्त्यव्यभिचारापत्तिरिति वाच्यम्,

देशभेदेऽपि प्रयागनगरवृत्तित्ववैशिष्ट्येन दृष्टस्य शाटकस्य काशीवृत्तित्ववैशिष्ट्येन दृष्टशाटकेन सहाभेदव्यवहारवत् कालभेदेऽपि आनुपूर्वीणामभेदकत्वात्तथैवानुभवेनान्त्यव्यभिचारयोरप्राप्तिमत्वात्—

**प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम् ।**
**वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥**

इति हरिणा प्रतिपादितेनानेन वाक्येनाभेद बोधनात् ।

न च वर्णानामेकत्वे नित्यत्वे विभुत्वे च किम्मानमिति वाच्यम्, दिनान्तरानुभूतेऽधुनानुभूयमानस्य सोऽयमिति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे **'तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यतीति'** न्यायात् पराभिमताशु विनाशित्वाभावे सिद्धे नित्यत्वात्, सर्वदेशेषूपलम्भेन विभुत्वात्, लाघवेन चैकत्वात्, इत्येवमङ्गीकारेणोक्ताशङ्कायाः समाधेयत्वात् ।

ननु वर्णानां नित्यत्वे विभुत्वे च घटपदे टकारादौ तदव्यवहितोत्तरक्षणोत्पत्तिकत्वरूपानुपूर्वी कथमुपपद्येतेति चेन्न, नित्यत्वपक्षे उत्पत्त्यनवच्छिन्नो घकारज्ञानाधिकरणीभूतो यः कालस्तत्कालोत्पत्तिकटकारज्ञानविषयत्वरूपस्यैवानुपूर्वीघटकाव्यवहितोत्तरत्वस्वीकारेणोपपत्तेः, प्रथमक्षणस्यापि घकारज्ञानाधिकरणत्वादुत्पत्यनवच्छिन्नेति निविष्टम् ।

ननु तृतीयक्षणे ज्ञानस्य नाशात् तृतीयादिवर्णाधिकरणकालस्य कथं पूर्वज्ञानवत्वमिति चेन्न, अत्यन्तरागवतः पुंसः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवात्तत्रैकत्ववद् ज्ञानानामपि नित्यत्वपक्षे स्थिरत्वाभ्युपगमात् ।

न च शब्द-बुद्धि-कर्मणां क्षणिकत्वमिति न्यायनयेन क्षणिकत्वमभ्युपगतमिति वाच्यम्, इदानीं जानामि, इदानीमुच्चारिता इति व्यवहारबलेन क्षणिकत्वपक्षस्यानभिमतत्वात्, अन्यथा क्षणस्यातीन्द्रियतया इदानीमिति ज्ञानासम्भवः स्यात्, तादृशव्यवहारबोधकवाक्यस्यैतत् क्षणावच्छिन्नज्ञानवानहमित्यर्थकत्वात् । परमते तु सोऽयं गकार इति प्रत्यभिज्ञानुत्पत्तिः स्यात्, समेषां वर्णानामुत्पत्तिमत्वेन सोऽयमित्यभेदप्रत्ययानुत्पादात् ।

न च गत्वावच्छिन्न-प्रतियोगिताकभेदाभाव एव तद्विषय इति वाच्यम्, द्वयोर्घटयोरपि सोऽयमिति प्रत्यभिज्ञापत्तेः, तत्रापि घटत्वेन रूपेण भेदाभावस्य सत्त्वात् । सोऽयमिति प्रत्यभिज्ञाया व्यक्तिविषयकत्वे बाधकाभावाच्च । न च गकार उत्पन्न इति प्रतीतिस्तत्र बाधिका भविष्यतीति वाच्यम्, "श्यामो नष्टः", "रक्त उत्पन्नः" इति प्रतीते रूपगतोत्पत्ति-

विनाशारोपेण, स्वाश्रयसमवायित्वरूपपरम्परासम्बन्धेन वोपपत्तिवद् ध्वनिनिष्ठोत्पत्तेरारोपेण, स्वाश्रयध्वनिव्यङ्ग्यत्वरूपपरम्परासम्धेन वा तदुपपत्तिस्वीकरात्।

ननु वर्णस्थले ध्वनिसत्त्व एव मानाभावः, शङ्खाद्यभावेन तदुत्पत्यसम्भवश्चेति चेन्न, वर्णोच्चारणस्थलेऽपि तत्स्थाने रसनाया ईषदन्तरपाते वर्णानुपलब्धेः, ध्वन्युपलब्धेश्चानुभवेन, हसितरुदितादौ जिह्वाभिघातकण्ठसंयोगादेस्तज्जनकत्वस्याऽवश्यकत्वेन च ध्वनिसत्त्वावश्यकत्वात्।

न च ध्वन्युत्पत्तिं प्रति वर्णोत्पत्तिसामग्र्याः प्रतिबन्धकत्वाद्वर्णस्थले ध्वनेरभाव इति चेन्न, वर्णोत्पत्तौ ध्वन्यनङ्गीकारे प्रतिबन्धकत्वकल्पनागौरवेण ध्वनिसत्त्वस्य कल्पनाया एव लघीयस्त्वात्। तत्र ध्वनिस्वीकारेणैव बहुषु शब्दमुच्चारयत्सु महाध्वनिः श्रूयत इति प्रतीत्युपपत्तेश्च।

यदि च स एवायं शङ्खध्वनिरित्यादिप्रत्यभिज्ञया ध्वनीनामपि नित्यत्वम्, तर्हि तज्ज्ञानकारणीभूतवायुसंयोगनिष्ठमुत्पत्यादिकन्तत्रारोप्यते, स्वपदेनोत्पत्यादिकं गृहीत्वा स्वाश्रयव्यङ्ग्यत्वरूपपरम्परासम्बन्धेन वा बोध्यते।

आरोपादिनैव "शब्दं कुरु" इत्यस्याप्युपपत्तिः। लोहितः स्फटिक इत्यत्र तु जपाकुसुमगतस्य लौहित्यस्य स्फटिके समारोप एव, न तत्र स्वसमवायिसंयुक्तत्वरूपपरम्परासम्बन्धेन कार्यनिर्वाहः, स्फटिकस्य लौहित्यमित्येतदर्थं स्वसंयुक्तसमवेतत्वरूपपरम्परासंबन्धस्यापि कल्पनीयतया गौरवग्रस्तत्त्वात्।

वस्तुतस्तु सर्वत्रारोप एव समुचितः, "रसो रूपवान्" इत्याद्यप्रतीत्या परम्परासम्बन्धस्य विशिष्टबुद्ध्यनियामकत्वात् तत्रापि रससमवायिसमवेतत्वस्य रूपे सत्वात् तथा प्रतीत्यापत्तेः॥

एवं वायुनिष्ठमेवोदात्तत्वादिकं वर्णे समारोप्यते तेन नोदात्तत्वादिगुणभेदादनेकत्वं वर्णानाम्।

ननु गौर्वाहीक इत्यादौ वाहीके गोत्वारोपे यथा जाड्यमान्द्यादिप्रयोज्यसादृश्यं हेतुस्तथा प्रकृते नास्तीति चेन्न, उत्पादविनाशशालिनि वायुसंयोगे, नित्ये वर्णे च प्रागनुपलभ्यमानत्वे सति उपलभ्यमानत्वरूपधर्मसत्वेन तत्प्रयोज्यमेव तयोः सादृश्यमारोपनिमित्तमित्यस्य तत्रापि वक्तव्यत्वात्।

ननु वर्णमुत्पादयतीत्यादिना प्रतीतायाः प्रागसत्वे सत्त्वरूपाया उत्पत्ते र्वर्णस्यानुभवात् कथन्नित्यत्वं वर्णानामिति चेन्न, वर्णमुच्चारयतीत्यस्यैव प्रत्ययात् तादृशोत्पत्ते र्वर्णेष्वभिमतत्वेन नित्यत्वस्य सूपपादनीयत्वात्।

न च उच्चारितत्वस्योत्पादितत्वाभिन्नतया वर्णेषूत्पत्तेरेव स्वीकार इति वाच्यम्, उच्चारितत्वस्य कण्ठताल्वाद्यभिघातजन्याभिव्यक्तिविशिष्टरूपत्व-स्वीकारेणोत्पादितत्वापेक्षया भिन्नत्वेनोत्पत्तेरभावस्यैवाभिमतत्वात्।

ननु वर्णानां नित्यत्वे "पदमिदं पुरुषशुकाद्युच्चारितं" पुरुषशुकादि-निष्ठजनकतानिरूपितजन्यतावच्छेदकविलक्षणधर्मवत्वात्" इति लोक-प्रतीतिसिद्धानुमित्यसिद्धिरिति चेन्न, पुरुषशुकादिकण्ठताल्वभिघातनिष्ठ-जनकतानिरूपितजन्यताच्छेदकवैजात्यं ध्वनिनिष्ठं वायुसंयोगनिष्ठं वा वर्णेष्वारोप्यत इति तदुपपत्तेः। तारत्वाद्यपि तन्निष्ठमेव तत्रारोप्यतेऽत एव भामत्यां "तारत्वादिवायुनिष्ठं वर्णेष्वारोप्यते" इति देवताधिकरणे प्रति-पादितम्।

न च वर्णनित्यत्वकल्पे "इको यणचि" इत्याद्युपयोगिनो वर्णस्य प्रकृति-विकृतिभावोपपत्तिः कथं स्यादिति वाच्यम्, बुद्धिविपरिणामेनैव प्रकृति-भावोपपत्तेः।

ननु आरोपे किं बीजमिति चेन्न, अन्तः कारणस्य रागादिदोष एव तत्र बीजमित्यङ्गीकरात्। न च प्रागनुपलभ्यमानत्वे सति उपलभ्य-मानत्वरूपसादृश्यस्यारोपे बीजत्वमुक्तमिति वाच्यम्, यथा कथञ्चित् सादृश्यस्य सर्वत्रैव सत्त्वेनातिप्रसङ्गात्।

ननु सोऽयमिति प्रत्यभिज्ञया नित्यत्वमङ्गीक्रियते, तच्च न युक्तम्, यथा दीपकलिकाया अनित्यत्वेऽपि नेयं दीपकलिका "इति भ्रमात्मिका प्रत्यभिज्ञा, तथा प्रकृतेऽपि वक्तव्यत्वात् इति चेन्न वातादिना प्रत्यक्ष-तोऽनित्वदर्शनरूपबाधसत्वाद् भ्रमत्वम्, अत्र तु तथा दर्शनस्याभावेन भ्रमत्वायोगात्।

न च वर्णानामनित्यत्वादिनये वायुसंयोगनिष्ठजनकतानिरूपिता जन्यता ककार इति कत्वमेव तदवच्छेदकमिति लाघवम्। नित्यत्ववादि-नये ककारस्य नित्यत्वेन तत्र जन्यताया वक्तुमशक्यत्वात् तद्विषयकज्ञाने जन्यता वाच्या, तदवच्छेदकञ्च ककारविषयकप्रत्यक्षत्वं वाच्यमिति कत्वापेक्षया तत्र धर्मे शरीरकृतमुपस्थितिकृतञ्च गौरवं स्पष्टमित्य-नित्यत्वपक्ष एव ज्यायानिति वाच्यम्। अनन्तप्रागभावध्वंसादिकल्पना-पेक्षया तादृशशरीरकृतोपस्थितिकृतगौरवस्याकिञ्चित्करत्वात्। नित्यत्वनये वायुसंयोगनिष्ठजनकतानिरूपिता, ककारविषयकप्रत्यक्षनिष्ठया जन्यता, तदवच्छेदकं न हि तादृशप्रत्यक्षत्वमपितु लाघवात् कत्वमेवेति कत्वस्य तत्कार्यतावच्छेदकत्वकल्पनाच्च।

न च समानाधिकरणधर्मस्यैवावच्छेदकत्वनियमेन प्रत्यक्षवृत्तिजन्यतायाः कत्वे सामानाधिकरण्यासम्भव इति वाच्यम्। स्वनिष्ठविषयतानिरूपकत्वसम्बन्धेन कत्वस्य प्रत्यक्षज्ञानवृत्तित्वेन समानाधिकरण्यस्योपपादनीयत्वात्।

न च कपालसंयोगादिकं व्यञ्जकमभ्युपगम्य घटादीनामपि नित्यत्वं नीयतामीति वाच्यम्, वर्णे यथा "उत्पादयति" इति व्यवहाराभावेनोत्पत्त्यग्रहः, सोऽयमिति प्रत्यभिज्ञया नित्यत्वग्रहश्च, तथा घटादौ जातत्वाग्रहस्य, नित्यत्वग्रहस्य चाभावेन तत्र बाधकाभावाद् भ्रमत्वायोगेनोत्पत्तेरेवाङ्गीकारात्।

न च घटादावुत्पत्त्यग्रहस्य नित्यत्वग्रहस्य चाभावः स्ववासनाकल्पित एवेति वाच्यम्, उत्पत्त्यनन्तरमनुभवविषयीभूतस्य घटस्य तद् व्यापारात् प्रागनुभूतेन घटान्तरेणाभेदप्रत्यभिज्ञा न जायते, वर्णस्थले तु कण्ठताल्वादिव्यापारानन्तरमनुभूयमानस्य गकारस्य ततः प्रागनुभूतेन गकारान्तरेण सोऽयं गकार इति प्रत्यभिज्ञा जायते इति विशेषस्य सत्त्वेन दोषाभावात्।

ननु वर्णानां परमार्थतो नित्यत्वे "ब्रह्म सत्यं जगन्मिथ्या" इति सिद्धान्तभङ्गः, वर्णानामपि सत्यत्वादिति चेन्न, सृष्ट्याद्यकालिकोत्पत्तिकत्वे सति प्रलयाव्यवहितप्राक्क्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपनित्यत्वस्यैव स्वीकारेणादोषात्। ईदृशं नित्यत्वमभिप्रेत्य जैमिनिनाभिहितम्—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति. औत्पत्तिकशब्देनेदमेव नित्यत्वं वक्तुं शक्यं नान्यादृशम् ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वरूपम्।

यच्च शब्दनित्यतासिद्धान्तकं शब्दाधिकरणमपि तेनोक्तम्, तच्च वाचकमात्रस्य नित्यत्वमवगमयति, न तु वर्णनित्यत्वमात्रमिति बोध्यम्।

वाचकानां वर्णपदवाक्यानां नित्यत्वाभ्युपगमादेवानेककर्तृकोच्चारणविषयेऽपि घट पदमेकमिति प्रत्ययः, "एक इन्द्रशब्दोऽनेकेषु क्रतुष्वाविर्भवति" इत्यादिना सरूपसूत्रे महाभाष्ये स्पष्टीकृतम्। न हीयमेकत्वबुद्धिः वर्णविषया तेषामनेकत्वात्। न च एकार्थविषयकबोधजनकत्वेन पदस्यैकत्वमिति वाच्यम्, तत्र घटकतया प्रविष्टस्यैकार्थत्वस्यैकपदजन्यबोधविषयतया एकपदप्रयोज्जत्वस्य सत्वात् परस्परमन्योन्याश्रयापत्तेः। न च एकजायीयबुद्धिविषयतयैकपदत्वव्यवहार इति वाच्यम्, विषयैक्ये बुद्धीनामेकजातीयत्वं, तदेकजातीयत्वेन च विषयैक्यमित्यन्योन्याश्रयापत्तेः।

एकः पट इत्यादेरपि एकजातीयबुद्धिविषयतयोपपत्तौ तत्रावयववादातिरिक्तावयव्यसिद्ध्यापत्तेश्च ।

न च तत्रैक इति व्यवहारात्तत्सिद्धिरितिवाच्यम्, प्रकृतेऽपि तथा वक्तुं शक्यत्वात् । न च एकस्येन्द्रशब्दस्यैकजातीय इत्यर्थः, तावच्छब्दकल्पनं तत्र चैकजातीयत्वकल्पनमित्यपेक्षया तदेकत्वस्यैवौचित्यात् ।

घटत्वजात्यैक्येन दशसु घटेषु एको घट इति प्रतीत्यापत्तेश्च । एकजातीय इन्द्रशब्द इत्यव्यवहाराच्च । तच्चेदं पदं प्रकृतिप्रत्ययविभागवत् प्रकृत्यादिकमपि नित्यमेव ।

यद्वाऽखण्डमेव तत्पदं स्वीक्रियतेऽन्यथा वर्णानामपि सावयवत्वे "ऋ-लृ" वर्णयोरेफलकाररूपभागस्य, "ऐ-औ" इत्यत्रेकारोकारयोर्भागयोर्दर्शनाद, भागस्य सभागत्वे तस्यापि सभागत्वमित्येवमनवस्था स्यात्, नित्यताभङ्गश्चेति वाक्यमपि पदविभागरहितमखण्डमेव, 'वाक्यादपोद्धृत्य पदानि अन्वाख्यायन्ते" इति भाष्यात् । तत्र क्वचिद्वाक्यस्यैव विभज्यान्वाख्यानं, क्वचित्पदस्यैवेति लक्ष्यानुसाराद् व्यवस्था ।

न च वर्णेषु नावयवाः तदवभासस्तु तत्तदुच्चारणविशेषव्यङ्ग्यतत्तद्वर्णसमानाकारक्रमिकध्वन्युपरागो पाधिरिति वाच्यम्, रेफसदृशध्वन्युपरागवशाद्रेफावभास इव पदे वर्णावभासो वाक्ये पदावभासः कल्पित एवेत्यस्यापि वक्तव्यत्वात् ।

न च पदानां नित्यत्वे शास्त्रं व्यर्थमिति वाच्यम्, रेखाकल्पितगवयेन वास्तविकगवयज्ञानमिव कल्पितेन प्रकृत्यादिनाऽखण्डपदादिज्ञानस्य जायमानत्वेन शास्त्रस्य साफल्यसम्भवात् ।

एवमुपर्युक्तरीत्या वाह्यवैखरीवाचो वाचकत्वेन सर्वथा संशयसन्दोहस्य निवृत्तिः सम्भाविताऽत आन्तरस्य स्फोटस्य वाचकत्वकल्पनमनावश्यकमिति पूर्वमतस्य तात्पर्यम् ।

एतच्च मतन्न समीचीनम्, अनेकवर्णध्वनिकल्पने मानाभावात्, अवर्णानामैक्यमवर्णककारादीनाञ्चानेकत्वमित्यत्र बीजाभावेनार्धजरतीयस्यान्यायत्वाच्च ।

तस्माद् ययैव युक्त्याऽवर्णादीनां नित्यत्वमेकत्वं विभुत्वञ्च व्यवस्थापितम्, तयैव युक्त्याऽऽकाशदेश एकः स्फोट एव श्रोत्रग्राह्योऽभ्युपगन्तव्यः । स्फोटस्यैकत्वादेव "एको गकार इति प्रत्यय उपपद्यते । ननु कत्वगत्वादिभेदकधर्मोपलब्धेरेकत्वासम्भव इति वाच्यम्, तत्तत्स्थानाभिघातव्यङ्ग्यस्य कत्वादिधर्मस्याभिव्यञ्जकवायुनिष्ठत्वेन स्फोटस्यैकत्वसम्भवात् ।

ननु कथमेवं स प्रत्यय इति चेन्न, कत्वादिवैजात्याक्रान्तैः वायुभिः

स्वरूपरूषितस्य तस्यैव स्फोटस्य भानम्, तदनाक्रान्तेस्तु ध्वनिरूपेण भानमिति स्वीकारेणादोषात्। ककार उत्पन्न इति प्रत्ययस्तु ज्ञाननिष्ठोत्पत्त्यादेः स्वाश्रयविषयत्वसम्बन्धेनारोपादेव सम्पद्यते।

न च वायुनिष्ठकत्वादेः श्रोत्रेण ग्रहे "येन यस्य धर्मो गृह्यते, तेन तदपि" इति न्यायेन वायोरपि श्रोत्रेण ग्रहणापत्तिरितिवाच्यम्, यन्निष्ठाधारतानिरूपिताधेयतया धर्मग्रहणं तस्यैव धर्मिणस्तेनेन्द्रियेण ग्रहणात्, न हि वायुवृत्तितया कत्वादेर्ग्रहणम्, अपितु स्फोट वृत्तितयेति स्फोटस्य ग्रहो न पवनस्येति स्वीकारात्, रसनादौ रसादिमात्रग्राहकताया दृष्टत्वेन तथा नियमे व्यभिचाराच्च।

ननु एवमपि ककारहकारयोरैक्यप्रत्ययापत्तिर्भिन्नप्रत्ययानापत्तिश्च, स्फोटस्यैकत्वादितिचेन्न, व्यञ्जकगतवैजात्यमादाय ककारहकारयोः भेदव्यवहारोपपत्तेः। न च व्यञ्जकगतवैजात्यमादाय भेदव्यवहृतेरुपपत्तिः कथमिति वाच्यम्, अद्वैतसिद्धान्ते ब्रह्मण एकस्य भेदाभावेऽपि विषयसम्बन्धेनान्तःकरणवृत्तिवैचित्र्याद्यथा भेदव्यवहारस्तथाऽत्रापि विशेष्यांशस्य स्फोटस्यैकत्वेऽपि व्यञ्जकवैजात्याद् भेदव्यवहारोपपत्तेः। उपाध्यनालिङ्गिततत्तत्प्रतीत्यभावात्, देशकालादिभेदप्रत्ययोऽपि तत्रौपाधिक एवेति स्वीकारेण समाधेयत्वात्।

एष स्फोटः पदादिरूपेण व्यङ्ग्य इति बोध्यम्। सखण्डपक्षेऽपि काल्पनिकः प्रकृतिप्रत्ययविभागः पदे, वाक्ये च पदविभागः, भेदेन काल्पिता अपि ते प्रकृतिप्रत्ययादयः पदवदेव नित्याः, प्रतिपादितञ्च "आद्यन्तौ टकितौ" इति सूत्रे भाष्ये" नित्येषु शब्देषु कूटस्थैरविचालिभिः वर्णैर्भवितव्यम्" इति वर्णशब्देन प्रकृतिप्रत्ययागमादीनामपि ग्रहणस्याभ्युपगमात्।

यद्वाऽखण्डान्येव पदानि वाक्यानि च, रेखागवयन्यायेन तदन्वाख्यानार्थकल्पिते पदादौ प्रकृतिप्रत्ययविभागकल्पना, पदविभागकल्पना च, इदमपि तत्रैव सूत्रे भाष्ये स्पष्टम्।

एष स्फोट एव कत्वादिनाऽभिव्यज्यत "ऐ औच्" इत्यत्र भाष्येध्वनितम्, तथाहि - तत्र हि नरसिंहवज्जात्यन्तरत्वाद्वर्णैकदेशानां वर्णग्रहणेनाग्रहणामिति पक्षे क्लृप्त इत्यत्र "कृपो रोलः" इति लत्वाप्राप्तिमाशङ्क्य "अथवोभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवति" इत्युक्तम्, तस्यायमाशयः, वस्तुतो रत्वादिमान्न कश्चित्, किन्तु अन्यगततत्तद्रूपेण स्फोटस्यावभासमात्रम्, एवञ्च कल्प्यत इत्यादावप्रवृत्तिः स्यात्, अतो रेफावभासिस्फोटप्रसङ्गे लकारावभासिस्फोट इत्यर्थः।

एवञ्च सर्वत्रैव सिद्धं कृपावपि रेफावभाससत्वात् । आकारादौ तु नैवं ह्रस्वाकारावभास इति न तत्र ह्रस्वाकारावभास प्रयुक्तं कार्यम् ।

यत्तूक्तं कैयटेनात्र–अन्तर्भूतानन्तर्भूतसाधारणी जातिर्निर्दिश्यत इति, तन्न समीचीनम्, तादृशजातिसत्वे मानाभावात्, नरसिंहवद् वर्णान्तरमिति स्वोक्तिविरोधाच्च, उभयसाधारणरत्वादिजातिसत्वे वर्णान्तरोक्तिविरोधात् । "सादृश्यात्तु प्रत्यभिज्ञा" इति स्वोक्त्यसङ्गतेश्च । रश्रुतेरित्यत्र श्रुतिपदास्वारस्याच्च, रजातेर्लजातिरित्यनुक्तेश्च । तादृशजातिसत्वे वर्णैकदेशानामपि तज्जातिमत्वेन वर्णग्रहणे न ग्रहणमिति पक्षस्य सिद्धया ग्रहणपक्षमुक्त्वा "अथवा न गृह्यन्ते,' इति पक्षे तत्समाधानपरभाष्यासङ्गतेश्च । अत एवाष्टमे "रषाभ्यामितिसूत्रे कैयटः–यथा च नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात् पुरुषमृगराजाभ्यामेकाकृतियोगाभावः, एवं वर्णैकदेशयोरपीति ।

नच स्फोटे वर्णविभागभावात् 'रश्रुते' इति पूर्वोक्तभाष्यविरोध इति वाच्यम्, स्फोटस्य च तत्तद्वर्णपदादिरूपेण ताल्वाद्यभिघाताज्ज्ञानविषयो मध्यमावस्थोऽर्थ इति स्वीकारेणदोषात्, तथा च स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुटयते यः सोऽपि स्फोट इत्यर्थो लभ्यते । केवलं स्फुटत्यर्थोऽस्मादिति स्फोट इति व्युत्पत्तिस्वीकारे स्फोटो वाचक इत्यत्र पौनरुक्त्यापत्तेः । न चैवं विलक्षणवायुसंयोग एव वाचकोऽस्तु इति वाच्यम्, शृणोमीत्याद्यनुभवेनातिरिक्तस्य श्रोत्रग्राह्यस्यावश्कत्वात् ।

एवमान्तरस्यैव स्फोटस्य वाचकत्वन्न वैखरीरूपस्येति व्यवस्थितम् ।

अपि च द्रुतमध्यमविलम्बितासु प्रत्यत्नभेदेन चिराचिरकालोच्चारणजन्यत्वाद् भिन्नकालत्वभेदयोरापत्तौ ह्रस्वाकारस्यापि भेदे भिन्नकालत्वे चान्यतमवृत्तौ तपरकरणेऽन्यतमवृत्तावतोभिस ऐसोऽनापत्तिः, स्फोटाङ्गीकारे तु न दोषः, तदभिव्यक्त्यनन्तरं जायमानेन चिरकालेन वैकृतध्वनिना तस्य चिरकालमुपलब्धावपि स्फोटे कालभेदाभावात्, । तमेषायं द्रुतमुच्चारितवानन्यो विलम्भितमिति प्रत्यभिज्ञा सत्त्वात्, ह्रस्वदीर्घादौ तु नैवमभेदप्रत्यभिज्ञा, वैकृतध्वनिनिष्ठस्य चिराचिरोपलब्धिकरस्योच्चारयित्राऽऽलस्यादिकृतस्य कालस्य स्फोट आरोपे मानाभावात् कालकृतभेदाभाव एव, "आरोपे सति निमित्तानुसरणन्नतु निमित्तमस्तीत्यारोप इति न्यायात्, अत एव तिसृष्वपि वृत्तिषु ह्रस्वोऽयमकार इत्यादिरनुभूयते ।

वर्णानां जन्यत्वे तु क्षणस्थायित्वाभ्युपगमात् कस्य चिरमुपलब्धिः स्यात्, तदुक्तं तपर सूत्रे भाष्यकृता 'वृत्त्यन्तरे ऐसोऽनापत्तिः, तत्तद्वृत्तिजनकयत्नभेदेन वर्णानां तत्तत्कालत्वस्यैवौचित्यादित्याशङ्क्य" एवं

तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः, कथम् ? यथा भेर्या हन्ता भेरीमाहत्य कश्चिद् विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव, ध्वनिकृता वृद्धिः, महाभाष्ये प्रतिपादिता—

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।**
**अल्पो महाँश्च केषाञ्चिदुभयं तत्स्वभावतः ॥**

तस्य भाष्यस्यायमाशयः—स्फोटः-श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थः शब्दः, तदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपो ध्वनिः शब्दस्य चिराचिरोपलब्धिकरत्वाद् गुण उपकारकः, भेरीमाहत्येत्यस्य "तं शब्दमुपलभमानः "इति शेषः । ध्वनिरूपेणापि स्फोट एव गृह्यते इति दृष्टान्त-दार्ष्टान्तिकोभयसाधारणमुच्यते, "स्फोटस्तावानेवेति । ध्वनिकृता-वैकृतध्वनिकृता, ध्वनिः स्फोटश्च 'स्तः" इति शेषः, शब्दानां सम्बन्धी ध्वनिः । वैकृतध्वनिस्तु केषाञ्चिदल्पः, अल्पकालमुपलब्धिजनकः, केषाञ्चित् महान्-वहुकालमुपलब्धिजनको लक्ष्यते । तत्र प्रमाणमुभयं तत्स्वभावतः सिद्धमिति शेषः, तदुक्तं हरिणाः—

**स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।**
**ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥**
**स्वभावतस्तु नित्यत्वात् ह्रस्वदीर्घप्लुतादिषु ।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥**

अभिन्नकालत्वोपपादकम् "स्वभावतस्तु नित्यत्वात्" इति । उपरितनस्य श्लोकद्वयस्यायमाशयः—अभिन्नकालस्य कालानवच्छिन्नस्य स्फोटस्येत्यनेन नित्यत्वं फलितम् । ननु तदा लोके तदानीं घटशब्द उच्चारितो नत्विदानीमिति व्यवहारः कथम् इति चेन्न, ध्वनिकालानुपातिन इत्यनेन ध्वनिकाललक्ष्यत्वाङ्गीकारात् । ग्रहणस्य व्यञ्जकस्योपाधेर्ध्वन्यादेर्भेदेन वृत्तिभेदं द्रुतादिभेदं प्रचक्षते कथयन्ति, ननु तस्य वास्तविकद्रुतादिवृत्तिः । स्वभावभेदादिति-ध्वनेः स्वभावभेदात् अल्पमध्योच्चारणभेदाद् ध्रस्वदीर्घप्लुतादिषु सत्सु कालः-एकमात्रिकद्विमात्रिकादिकालो नित्यत्वे सत्यपि शब्दस्येत्युपचर्यते-समारोप्यते इति यावत्, न तु वस्तुतस्तस्य कालानवच्छिन्नत्वाद् । प्राकृतध्वनिशब्देन स्फोट व्यञ्जकमत्रोच्यते । तद्यथा—

**स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।**
**स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥**

अत्र ग्रहणे=अभिव्यक्तौ । स्थितिभेदे—चिराचिरोपलब्धिविशेषे, ।

शब्दस्योर्ध्वमभिव्यक्ते र्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥

शब्दस्याभिव्यक्तेरूर्ध्वं वैकृता ध्वनयः "जायन्ते" इति शेषः । ते च वृत्तिभेदे-द्रुतादिभेदे समुपोहन्ते कारणानि भवन्ति । स्फोटस्तु तैर्वैकृत-ध्वनिभिर्न भिद्यतेऽतो न वैकृतध्वनिगतकालादिभेदारोपः स्फोटे ।

एवमान्तरस्फोटस्य वाचकत्वं महाभाष्य-वाक्यपदीयाभ्यां परिपुष्टं न वाह्यवैखरीवाचो वाचकत्वं प्रमाणप्रतिपन्नम् ।

अत्र निष्कृष्येदं बोध्यम्-- केनचिद् घटमानयेति वैखरीनादः प्रयुक्तः, स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः, स नाद इन्द्रियद्वारा बुद्धौ गतस्सन्नर्थ-बोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः । युगपदेवोच्चा-रयितुस्तुमध्यमावैखरीभ्यां नाद उत्पद्यते, तत्र वैखरीनादो वह्नेः फूत्कारादि-वन्मध्यमानादोत्साहकः मध्यमानादः स्फोटं व्यञ्जयति । ततः शीघ्रमेवार्थ-बोधः; परस्य विलम्बेनानुभवसिद्धत्वात् । अत एव श्रोत्रोपलब्धिर्बुद्धिनि-र्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्याकरग्रन्थः संगच्छते, कत्वादिना श्रोत्रोपलब्धित्वं, स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्, स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपलक्षितः कृत इति तदर्थः । इत्येष परमार्थो निष्कृष्योच्यते ।

**वेदान्तिमतविमर्शः**—यत्तु अद्वैतवादिनो ब्रह्मसूत्रशाङ्करभाष्ये–

अत्र वर्णा एव शब्दा इति भगवानुपवर्षः, ननु वर्णानामुत्पन्नप्रध्वंसि-त्वात् साहित्याभावेन वाचकत्वन्न स्यादिति चेन्न, त एवेमे वर्णा इति प्रत्य-भिज्ञानात् तेषामुत्पन्नप्रध्वंसित्वाभावात् । न च सादृश्यात् प्रत्यभिज्ञेति वाच्यम्, बलवत्तरबाधकोपनिपातं बिना सादृश्यनिबन्धनत्वे प्रमाणा-भावात् । न च प्रत्यभिज्ञानस्य गत्वादिजातिविषयत्वम्, न गकारादि-व्यक्तिविषयकत्वम्. गकारादिव्यक्तीनां प्रतिपुरुषं भेदोपलम्भादिति-वाच्यम्, लोके हि द्वि र्गोशब्द एवोच्चारित इत्यस्यैव प्रतीतेः, न तु द्वौ गो शब्दौ ' इत्यस्येति कल्पनया व्यक्तिप्रत्यभिज्ञानस्य सत्त्वात् ।"

ननु वर्णा एवोच्चारणभेदेन भिन्नाः प्रतीयन्ते, देवदत्तयज्ञदत्तयोर-ध्ययनध्वनिश्रवणादेव भेदप्रतीतेरिति चेन्न, वर्णानां निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद् व्यञ्जकभेदप्रयुक्तभेदप्रत्ययोपपत्तेः । ध्वनिरूपव्यञ्जककृतभेदप्रत्ययोपपत्तेश्च । एवमुदात्तत्वादिधर्मा अपि व्यञ्जकप्रयुक्ता एव वर्णव्यक्तिषु प्रतिभासन्ते, ननु स्वरूपप्रयुक्ता इत्येवं स्वीकारेण वर्णेषु भेदाभावस्य सिद्धत्वात् । न च व्यञ्जकगतोदात्तत्वादि-भेदात् प्रत्यभिज्ञायमानानां वर्णानामपि भेदः स्यादिति वाच्यम्, व्यक्ति-

भेदेन जातिभेदाभावात् अन्यकृतभेदेनान्यस्य भेदाभाव स्वीकारात्। एवं वर्णेभ्यश्चार्थप्रतीतेः सम्भवाद् व्यर्था स्फोटकल्पना।

ननु अनेकत्वाद् वर्णानाम् "गौरित्येकं पदं" शुक्लां गामानय 'इत्येकं वाक्यमित्येकबुद्धिविषयता नोपपद्यते इति चेन्न, वनम्, सेना, शतमितिवत् प्रतीतिसम्भवात्,

न च वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमनाः पदं स्युस्ततो राजा, जरा, कपिः पिकः, सरः रसः, इत्यादिषु पदविशेषावगतिर्न स्यादिति चेन्न, क्रमानुरोधिन्यः पिपीलिका यथा पंक्तिबुद्धिमारोहन्ति तथैव क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्तीति स्वीकारेणादोषात्। एवं क्रमेणावभासमाना वर्णा अर्थं प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना इति वर्णा एव वाचकाः। स्फोटवादिनस्तु वर्णाः स्फोटं व्यञ्जयन्ति स्फोटोऽर्थं व्यनक्ति। अतो गरीयसी कल्पना स्यादित्याहुर्वेदान्तविदः।

अत्र वेदान्तिनो बर्णानां नित्यत्वं, तेषु ध्वनिगतधर्मावभासे नानात्वप्रतीतिञ्चाभ्युपेत्य स्फोटमतमाचिक्षुपुः। तत्रेत्थमालोच्यते स्फोटवादिभिः—

वेदान्तविदाम्मते ब्रह्मणो नित्यत्वेन तदितरस्य सर्वस्यानित्यत्वान् नित्यानां वर्णानामभावस्य सत्वेन वर्णानां नित्यत्वमभिधीयमानं स्वसिद्धान्तभङ्गभिया सापेक्षमेव स्वीकरणीयमिति तेषामपि अनित्यत्वमेव, सृष्टिप्रलयमध्येऽविनाशित्वरूपमेव तत्, तथा च सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंसप्रागभावादिकल्पनाया गलेपातात्लाघवं दूरापास्तमेव।

अपि च गकारादिवर्णेषु गत्वादिजातेरभावेन गकारादिज्ञानस्य निर्विकल्पकतया प्रत्यक्षत्वानापत्तिः। ध्वनिगतगत्वादिधर्मस्य भानाभ्युपगमे तु तदभाववति तत्प्रकारकज्ञानत्वेन भ्रमत्वापत्तिः।

अन्यच्च-गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्वस्वीकर्तुस्तव गकारतो घकारादिभेदस्य स्वतः सिद्धतया स्फोटखण्डनाय प्रवृत्तेन भवता वर्णैकत्वरूपस्वसिद्धान्तोऽप्यपहारितः। तस्माद् ध्वनिभेदा एव वर्णा न तु ध्वन्यतिरिक्ता नित्याः। क्वचिद् भाष्ये वर्णा नित्या इत्युक्तिस्तु स्फोटपरा, वर्णानामनित्यत्वे च तत्र वाचकत्वस्य दुरुपपादतया तदतिरिक्त स्फोटकल्पनाऽद्वैतवादिनापि अभ्युपगन्तव्यैव।

वैयाकरणनये तु स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनि-निष्ठ धर्माणामध्यासाद् ब्रह्मणि प्रपञ्चाध्यासे भिन्नरूपतया प्रपञ्चप्रतीतिरिव वर्णभदे प्रतीति र्नानुपन्ना।

न च शाब्दिकनिकाये स्फोटस्य ब्रह्मरूपतया निर्धर्मकत्वेन तत्र गत्वादिप्रकारकप्रतीते र्भ्रमत्वं दुर्वारमेवेतिवाच्यम्, तुरीयदशायां भ्रमत्वेऽपि

तव ब्रह्मण एव प्रपञ्चरूपेण प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्यत्वात् ।

भामत्यां यदपि—"गौरित्येकं पदमिति प्रतीतिः किं पूर्वानुभूतान् गकारादीनेव सामस्त्येनावगाहतेऽथवा गकाराद्यतिरिक्तं, गवयमिव वराहादिभ्यो विलक्षणम् ? यदि गकारादि विलक्षणमवगमयेद्, गकारादि-रूषितः प्रत्ययो न स्यात्, न हि वराहधीर्महिषरूषितं वराहमवगाहते। तस्माद् वर्णविषया स्मृतिरूपैव सा प्रतीतिस्तत्र वनमेकमित्यादि प्रतीवि-वदित्येवं रूपेणाभिहितम् ।

तच्च न विचारसहम्, तथाहि-इन्द्रियसन्निकर्षादिसामग्रीसमवधाने वराहो महिषश्चेत्येवं रूपेण समूहालम्बनैकाप्रतीतिर्दृश्यते, नैयत्यं तादृश-प्रतीते र्मास्तु, परमेकप्रतीतिविषयत्वं तत्र तथा वराह-महिषयोनुभूयते तथैव गोपदाद्याश्रितस्फोटस्थले क्रमिकाणां गकारादिवर्णानां ज्ञानं सामग्रीघटकतयापूर्वमपेक्षितमेवेति तादृशस्फोटप्रत्यक्षे गकारादि-वर्णानां हेतुत्वेन नैयत्याद् गकारादिरूपरूषितस्यैव स्फोटस्यार्थबोध-कत्वे न किञ्चिद् बाधकम् । गकारादिवर्णविषयिणी स्मृतिरूपा प्रतीति-रितिस्वीकारे वर्णसमुद्रायस्य प्रत्येकमनतिरिक्तवाद् वर्णरूपत्वं तदतिरि-क्तत्वं वेति जिज्ञासा जागर्ति, समुदायस्य वर्णरूपत्वे तेषां वर्णानामनेकत्वात् "एकमिति प्रतीतेरनुपपतिः प्रसज्जेत । समुदायस्यातिरिक्तत्वे तु सिद्धं पदार्थान्तरम् । न च एकं वनमिति प्रतीतिवदेकमिति प्रतीत्युपपत्तिः स्यादिति वाच्यम्, तस्यापि पक्षसमत्वात्, यत्रापि वृक्षसमुदायस्यातिरि-क्तत्वं, तद्रूपत्वं वेति विकल्पग्रासात्, गौतमेन प्रतिपादितं यथा—

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इत्यनेन दृष्टान्तस्योभयपक्षसमत्वोपपादितत्वात् ।

वृक्षसमुदायस्य तद्रूपत्वे तेषामनेकत्वेन तत्रैकत्वान्वयस्य वाध-प्रतिहतत्वाद् वेदाः प्रमाणमित्यत्रेव वनत्व एवैकत्वान्वयस्याभ्युपगन्त-व्यत्वाच्च ।

एवं पूर्वपथेनालोचितं स्फोटाक्षेपपरमद्वैतवादविदितं मतन्न विचार-चारुतामञ्चतीति स्थाली पुलाकन्यायेन निभालितन्तत् ॥

यद्यपि "सचायं स्फोट आन्तर प्रणवरूप एव 'ओंकार एव सर्वा वाव् सैषा स्पर्शोष्मिभिर्व्यज्यमाना वह्वी नाना रूपा भवति" इतिश्रुतेः—

**समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।**
**हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥**

इत्यादिस्मृतेश्च स एव प्रणवरूपः स्फोटो मध्यमानादांशरूपरूषितो वैखरीरूपतया परश्रवणगोचरः सन् अन्तःकरणग्राह्यो वाचक इत्युच्यते" इत्युपलभ्यते, तथापि नित्यस्यैकस्य वर्णस्य ध्वनिधर्मेण नानारूपतया भासमानस्य वाचकत्ववादिभिः सह, प्रणवरूपस्यैकस्य स्फोटस्य ध्वनिरूपेण व्यङ्ग्यस्य नानारूपतया भासमानस्य वाचकत्ववादिनामैक्यमिति शब्द-मात्रे विरोधमवलम्ब्य स्फोट खण्डनमसङ्गतमेव प्रतिभाति।

ध्वनि द्विविधः व्यक्तोऽव्यक्तश्च, तत्रोभयध्वनिना स्फोटोऽभिव्यज्यते, परं वर्णात्मक ध्वनिनाऽभिव्यक्तः स्फोटोऽस्माकं वाचको, नेतरः। वेदान्त-मतेऽपि ध्वनिरूपेणैव नित्यस्य वाचकत्वमिति को विशेषः स्फोटामर्ष शालिनाम् ?

यद्यपि लघुमञ्जूषाकृता—

सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिज्ञानगम्य एव, तेषां योग-बलेननोभयरूपपरा प्रत्यक्षात्। युक्तञ्चैतदेकस्यैव स्फोटस्य शब्दब्रह्म-रूपस्य -सर्वशब्दतदर्थोभयोपादानत्वेनोभरूपतयोभयोरपि तत्कार्ययो-रुभयरूपत्वात्

**क्रियाशक्ति प्रधानायाः शब्दशब्दपार्थकारणम्।**
**प्रकृते र्विन्दुरूपिण्याः शब्दब्रह्माभवत् परा॥ १॥**

इत्युक्तेः नित्यत्वं यावत् सृष्टिस्थितया, व्यवहारनित्यतया चेत्युक्तम्, तत् परावागभिप्रायेणेति सर्वं समञ्जसम्।

**मीमांसकमतसमीक्षा**—यत्तु शाबरभाष्ये मीमांसका :—

गौरित्युच्चारणे सति गोत्वरूपार्थ प्रत्यायकत्वेनाभिमतः शब्दः किं गकारादिवर्णरूपः? उत तद्भिन्नः, तदभिव्यङ्ग्यः स्फोटाख्यः कश्चनेत्या-शङ्कायां गकारौकारविर्जनीया एव शब्दाः, यतो श्रोत्रेन्द्रियग्राह्ये ह्यर्थे शब्द शब्दः प्रयुज्यते, ते वर्णा एव श्रोत्रग्राह्याः, परन्नतेऽर्थबोधकाः, वर्णानामर्थप्रत्यायकत्वं वदता वक्तव्यम् किं प्रत्येकं वर्णा अर्थंप्रत्यायेयुरुत तदतिरिक्तः समुदायः, अथवा संहता वर्णा इति। न तावदाद्यः पक्षः, प्रत्येकममर्थाननुभवात्। न तावद् द्वितीयः पक्षः, तदतिरिक्तस्य समुदायस्या-सत्वात्। न च तृतीयः कल्पः, क्रमभाविनां वर्णानां साहित्यासम्भवात्। अतो गकारादिव्यतिरिक्तः कश्चन स्फोटाख्यः पदार्थः परिकल्पनीयो येन गोत्वरूपार्थप्रतीतिरुपपद्येत।

ननु क्रमवर्तिनां वर्णानां स्वरूपतः साहित्यासम्भवेऽपि तत्तत्स्मरण द्वारार्थप्रतीतिरुपपद्यत इत्यनर्थिका स्फोटकल्पनेति चेन्न, स्मृतेरपि क्षणिव

कत्वादक्षरवत् स्मृतीनां यौगपद्यं दुर्घटमिति स्फोटस्यावश्यकत्वात्" इत्येवं संदिह्य पूर्वपूर्ववर्णानुभवजन्यसंकारसहितान्त्यवर्णस्यैव प्रत्यायकत्वमभ्युपगम्य स्फोटकल्पना निरर्थिका इति मन्यन्ते।

'शब्दार्थं प्रतिपद्यामहे' इति लौकिकवचनानुपपत्त्या प्रत्यक्षादिभिरनवगम्यमानोऽर्थः स्फोटाख्य शब्दो नोपगतुं शक्य इत्येवं तल्लौकिकवचनानुपपत्तिमपि लौकिकदृष्टान्तैरनेकैरनुपपन्नार्थं मृष्यन्ते ते मीमांसकम्मन्याः।

अपि च स्फोटपक्षे ह्यवश्यं तत्तद्वर्णानुभवजनितसंस्कारान्तरं स्फोटाभिव्यक्तिसमर्थमदृष्टमेव कल्पनीयम्, स्फोटकल्पना चेति द्विविधपदार्थकल्पनापेक्षया वर्णा एव वाचका इति पक्षे तत्तत्स्मृतिहेतुभूतं तत्तद्वर्णानुभवजनितसंस्कारसामर्थ्यमदृष्टमेव कल्पनीयम् इति एकपदार्थकल्पनायां लाघवं निगदन्ति च ते॥

तच्च न समीचीनम्, तथाहि—संस्कारो हि यदनुभवजनितस्तद्विषयमेव स्मरणमुपजनयति नत्वर्थान्तरविषयकम् इति, मीमांसकाभिप्रेतस्य पूर्वोक्तसमाधानस्य तैः कर्तुमशक्यत्वात्। नानावर्णविषयामेकां स्मृतिमभ्युपेत्य स्मृतिद्वारेण समाधानन्तु नोचितम्, सर्ववर्णविषयकैकस्मृतेरभावात्--

**भिन्नोपलम्भ-संभूत-वासनाभेदनिर्मिताः।**
**भवेयुः स्मृतयो भिन्ना न त्वेकाऽनेकगोचरा॥**

इत्यनेन वचनविशेषेण तथैवावगमात्।

समूहालम्बनमेकं सदसद्वर्णविषयकं ज्ञानमपि सकलवर्णविषयकबोधोत्पत्तावक्षममेव, तथाविधबोधोत्पत्तौ कारणाभावात्।

न चेन्द्रियेणातीतवर्णग्रहणस्य, संस्कारेण च वर्तमानवर्णग्रहणस्य सम्भवः, योग्यताभावात्। न च युगपदिन्द्रियं संस्कारश्चेमां बुद्धिं जनयत इति वाच्यम्, संस्कारस्य सहचरदर्शनादिना स्मरणजन्मनि निर्ज्ञातसामर्थ्यस्येन्द्रियेण सह व्यापाराभावात्। यदि चरमवर्णध्वंससत्वेऽसद्वर्ण विषयमेव सर्वेषां समूहालम्बनं ज्ञानं स्मृत्यात्मकमङ्गीक्रियते, तस्यैव बोधक्षमत्वञ्च, तदा विपरीतक्रमकाणां सरो रसो, नदी दीन इत्यादीनां समानाकारैव-प्रतीतिः स्यात्। एवमनेकविप्रतिपत्तीनां विद्यमानतया मीमांसकोक्तमसमीचीनमिव न समेषां स्वान्तमावर्जयितुमलमित्यलं पल्लवितत्वेन।

**न्यायमतखण्डनम्**—यदपि न्यायमञ्जरीकारेण न्यायमञ्जरीग्रन्थेऽभ्यधाय

"किमयमनुमानमहिम्ना स्फोटाभ्युपगमः? प्रत्यक्षप्रतीत्या वा?

न तावदनुमानतः स्फोटसिद्धिरुपपादयितुं पार्यते, परिदृश्यमानानु-

पूर्वीकवर्णेभ्य एवार्थप्रतीते र्जायमानत्वात् । ननु व्यस्ताः समस्ता वा वर्णा अर्थप्रत्यायका इति विकल्पेनोत्सादितं वर्णानां वाचकत्वमिति चेन्न, समस्ता एव वर्णा वाचका इत्यस्यैव तत्र समीहितत्वात् । न च वर्णानां क्रमिकत्वात् सामस्त्यं दुर्वचमिति वाच्यम्, क्रमभाविनामपि समस्तानां कार्यकारितया नैकशो दृष्टानां सामस्त्यस्याभ्युपगमात् । तथाहि - यथा क्रमभाविनोऽपि समस्ता ग्रासा एकां तृप्तिमुत्पादयन्तो दृश्यन्ते, एकस्मिन् ग्रासे हीयमाने न भवति तादृशी तृप्तिः । अतः समस्ता एव ग्रासास्तृप्तेः कारणम्, न समस्ता ग्रासा युगपत् प्रयोक्तुं शक्याः । यथा चानुवाकग्रहणे क्रमभाविनीनां संस्थानां सामस्त्ये सति सामर्थ्यम्, एकया संस्थया बिना तदामुखीकरणासम्भवात् । एवं तावल्लोके सामस्त्यं क्रमभाविनां दृष्टम् । अतो नेदं विरोधित्वं सामस्त्य-क्रमभावित्वयोः । तथा च सामस्त्यं तद्वद्वर्णव्यक्तीनामभ्युपगम्य समस्ता वर्णा एव वाचका इत्यभ्युपगन्तव्यम् ।" इति । तदपि विचार-मार्गन्न गच्छति—

यतोहि ग्राससंस्थादीनां युक्तं सामस्त्यं क्रमभाविनामपि, कार्यमपि तदीयं तृप्त्यादि क्रमशो निर्वर्त्यमानं दृश्यते, वर्णानां क्रमभाविनां सामस्त्य-न्तु नोचितं, तत्र तदीयबोधरूपकार्यस्य क्रमशो निर्वर्त्यमानत्वाभावात्, पदानान्तु वाक्यार्थबोधरूपप्रधानकार्यावयवभूतपदार्थबोधरूपकार्यनिर्वर्त-कत्वमतिस्पष्टमिति वक्तुं शक्यत्वेऽपि वर्णस्थले दोषस्य सत्त्वात् । अतो दृष्टान्त-दार्ष्टान्तिकयो वैपरीत्यसत्त्वेन तथा वक्तुमशक्यत्वाद्वर्णा न वाचकाः, स्फोट एवातिरिक्तो वाचक इत्यस्यैव ज्यायस्त्वात् ।

यदप्यभाणि तत्रैव "क्रमोपलब्धेष्वपि वर्णेषु मानसमनुव्यवसायरूप-मखिलवर्णविषयं सङ्कलनाज्ञानं यदुपजायते तदर्थप्रत्ययकारणं भविष्यति, दृश्यते च विनश्वरेष्वपि पदार्थान्तरेषु क्रमानुभूतेषु युगपदनुव्यवसायो मानसः, शतमाम्राणि भक्षितवान् देवदत्त इति ।

तदपि न रोचते सचेतसां चेतसि—मानसमनुव्यवसायरूपं ज्ञानं सकलवर्णविषयं "वर्णाः" इत्येतत्स्वरूपञ्चेन्न, "वर्णाः" इत्यतोऽपि बोधा-पत्तेः । ज्ञानविषयज्ञानस्यानुव्यवसायरूपत्वेनानुव्यवसायोपपत्तये तत्तद्वर्ण-ज्ञानस्य पूर्वमपेक्षिततया तदभावादनुव्यवसायस्य वक्तुमशक्यत्वाच्च ।

मानसज्ञानपरमेव मानसानुव्यवसायरूपं ज्ञानं स्वीक्रियते चेत्, तत्र लौकिकसन्निकर्षस्यासम्भवेन ज्ञानलक्षणा प्रत्यासत्ति र्वाच्या, तथा च तत्रापि सकलवर्णविषयकसमूहालम्बनमानसज्ञानात् पूर्वं तत्तद्वर्ण-विषयक ज्ञानस्यापेक्षितत्वेन तदभावान्न मानसं तादृशं ज्ञानं स्वीकर्तुमुचि-तम् । शतमाम्राणि भक्षितवान् देवदत्त इत्यत्र तु पूर्वमनुभूतस्य स्मृतिरेव

स्वीकर्तव्या, न तत्र मानसानुव्यवसायात्मकं ज्ञानम्, अनावश्यकत्वात् । न च वर्णस्थलेऽपि स्मृतिर्वाच्या, तत्तद्वर्णस्मृतेः क्षणिकत्वेन बोधकत्वासम्भवात्, समूहालम्बनत्वेन स्मृतेरभ्युपगमे तु स्मृतौ क्रमानवभासात् विपरीतक्रमेभ्यः सरो रसो, नदी दीन इत्यादिभ्यः समानाकारबोधप्रसङ्गापत्तिः स्यादिति ।

इत्थमुपरिप्रदर्शितेन पथाऽन्येषां स्फोटाक्षेपपरम्मतं यथावगमं समीक्षितमालोचितञ्च मया समेषां समाहितहृदां शब्दब्रह्मविचारकाणां सचेतसां विपश्चितां च नितान्तं सन्तोषं जनयिष्यतीति मे विश्वासः ।

## स्फोटभेदविवेचनम्

एवं स्फोटस्य वाचकत्वमुपवर्ण्य **तदीयभेदा** निरूप्यन्ते–वर्ण-पद-वाक्याखण्डपदवाक्येति पञ्च व्यक्तिस्फोटाः । शक्यतावाच्छेदिकाया जाते र्वाच्यत्ववत् शक्ततावच्छेदिकाया जाते र्वाचकत्वमिति मतमवलम्व्य वर्ण-पद-वाक्य-भेदेन त्रिविधो जातिस्फोटः, एवम्मिलित्वाऽष्टौ स्फोटाः सन्ति । एतेषां मध्ये वाक्यस्फोटस्यैव प्राधान्यं, तस्यैव लोकेऽर्थप्रत्यायकत्वात्, तेनैवार्थपरिसमाप्तेश्च । न्यायभाष्ये प्रोक्तमपि 'पदसमूहो वाक्यमर्थसमाप्तौ 'इति पदसमूहो वाक्यमर्थसमाप्तौ समर्थमित्यर्थः। परस्य प्रवृत्यादिविषय एव परस्य बुभुत्सितार्थप्रत्यायनाय शब्दः प्रयुज्यते, स चार्थो वाक्यार्थ एवेति कृत्वा सर्वे शब्दा वाक्यार्थपरा एव। न च केवलं वृक्ष इत्यादौ क्रियाप्रयोगाभावान्न वाक्यत्वमिति वाच्यम्, यत्रापि क्रियाप्रयोगोनावलोक्यते तत्रापि "अस्ति" "विद्यते" इत्यादि पदान्तरार्थानामध्याहारस्याङ्गीकारात्, लोकेऽस्त्यर्थं विना शुद्धपदार्थानवगतेश्च, तस्मादेव हि **"सर्वं हि वाक्यं क्रियया परिसमाप्यते"** इति शाब्दिकानां समयः। एवमेव क्रियादिमात्रप्रयोगे सर्वकारकाणामप्यध्याहारः समीप्सित एव । न च तथाऽभ्युपगमे चैत्रोऽग्निना तण्डुलान् पचतीति प्रयोगोपपत्ति र्नस्यादध्याहारेणैव कारकाणां लाभसम्भवस्योक्तत्वादिति वाच्यम्, कारकान्तरनिवृत्यर्थं तेषामुपादानेनोक्तप्रयोगोपपत्ते. ।

एवञ्च वाक्यस्फोटस्य प्राधान्येऽपि तेषामानन्त्येन संकेतग्रहस्य प्रतिवाक्यमसम्भवात्, वाक्यान्वाख्यानस्य लघुनोपायेनाशक्यत्वाच्चान्वाख्यानलाघवाय पदानि, तत्र प्रकृतिप्रत्ययविभागास्तत्तदर्थविभागाश्च कल्प्यन्ते, तद्द्वारा पदार्थबोधनं वाक्यार्थबोधनञ्च शास्त्रफलम् । यत्र तु वाक्यस्यैव शास्त्रेण संस्कारस्तत्र नैव पदात् पदार्थबोधनम् यथा षट् ते सन्त इत्यादौ वाक्यस्फोटस्य मुख्यत्वेऽपि यथाऽऽनन्दवल्यां शुद्धब्रह्मज्ञानार्थमन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्व-

प्रतिपादनमुपायः, तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्या-खण्डपदस्फोटा उपायाः,

**उपायाः शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥**

इत्यनेन वाक्येन तथैव प्रतिपादितत्वात् ।

अत एवोक्तं कौण्डभट्टेन वैयाकरणभूषणसारे-

**वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।**

**वर्णस्फोटः**

तत्राष्टविधस्फोटेषु सुप्तिङन्तं पदमिति, एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य वर्णस्य वा प्रकृति-प्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच्-तिप् इत्यादिकस्य वाच-कत्वे वर्णस्फोटः, ते च प्रयोगसमवायिनो विसर्ग-तिवादयो वर्णाः । न तावत् तत्स्थानित्वेन कल्पिताः सकारलकारादयः, तेषामनियतत्वात् तथा हि—विसर्गेण रोः स्मरणं तेन सोः, एवं णला तिपः स्मरणं तेन लकारस्य, एवञ्च गौरवं स्पष्टमेव । किञ्च स्थान्यादेशज्ञानशून्यस्यावैयाकरणस्यादेश-मात्रादबोधापत्तिश्च । न चादेशेषु शक्तिभ्रमादेव बोध तस्य भ्रमत्वे माना-भावात् । न चादेशानां भिन्नतया परस्परं व्यभिचार इति वाच्यम् स्थानि-नामपि तत्तद्वैयाकरणमतेन भिन्नतया परस्परं व्यभिचारस्य तत्पक्षेऽपि सत्त्वात् । कः शक्तः क नेति व्यवस्थानापत्तेश्च । सर्वेषां स्थानिनां शक्तत्वे गौरवस्यापि सत्त्वाच्च । आदेशानान्तु प्रयोगान्तर्गततया नियतत्वात् तेषां युक्तं शक्तत्वम्, तथा चाऽऽदेशिस्मरणकल्पना नेति लाघवम् । व्यवहारस्ता-वच्छक्तिग्राहकेषु मुख्यः स च श्रूयमाणतिङादिष्वेवेति त एव वाचकाः । स्थानिनो लकारस्य बोधकत्वे भू-ल इत्यतोऽपि बोधापत्तिः, तादृशबोधे भवतीति समभिव्याहारोऽपि कारणमिति चेत्तर्हि आवश्यकत्वात् "तद्धेतो-रेव तत्त्वे किन्तेन" इति न्यायमाश्रित्य तादृशसमभिव्याहारस्यैव वाचकत्व-मस्तु अन्यथा लकारस्य वाचकत्वं, समभिव्याहारस्य कारणत्व ञ्चेत्युभयं कल्प्यमितिरीत्यापि गौरवं स्यात् । तथा च तादृश समभिव्याहारः, समभि-व्याहृता वर्णा वेत्यत्र विनिगमनाविरहात् प्रयोगान्तर्गता एव वर्णा वाचका इति सिद्धयति तावद् वर्णस्फोट इति ।

न चादेशानां वाचकत्वे "ल कर्मणि…" इति सूत्रविरोध इति वाच्यम्, "लः कर्मणि" इत्यनुशासनञ्च लाघवात् कल्पिते लकारे कर्त्रादि-वाचित्वं कल्पितमादायेत्यङ्गीकारेण विरोधाभावात् ।

अयञ्च तार्किकाणां पदस्फोटत्वेनाभिमतः, शक्तं पदमिति तैः स्वीकृतत्वात्, तच्च मानाभावात्, फलाभावात्, स्वग्रन्थविरोधाच्चायुक्तमितिशाब्दिकाः। तथाहि– शक्तं पदं चतुर्धा, रूढं, यौगिकं, योगरूढं, यौगिकरूढञ्चेति। गौः, पाचकः, पङ्कजम्, अश्वकर्ण इति च क्रमेणोदाहरणानि। तत्र पाचक इति यौगिकोदाहरणे यच्छक्तं पदं पच अक इति, न तद् यौगिकं, समुदायस्तु यद्यपि यौगिकस्तथापि न शक्तः। एवञ्च शक्तं पदं यौगिकमित्यविचारिताभिधानम्। विशिष्टशक्त्यभावे सति व्याकरणबोधितार्थप्रकृतिप्रत्ययसमुदायरूपसुबन्ततिङन्तपदत्वं यौगिकपदत्वम्। तत्र सत्यन्तं योगरूढातिव्याप्तिवारणाय, तत्र विशिष्टे शक्तिग्रहात्।

यत्तु भूषणे स्फुटति अर्थो यस्मादिति स्फोटो वाचक इति केवलयौगिकः स्फोटशब्दोऽभिहितः, तदभिधानन्न सम्यक् साधुशब्दानामिवासाधु शब्दानामपि शक्तिमत्वेन वाचकत्वाविशेषात् स्फोटत्वापत्तेः, न चेष्टापत्तिः, शाब्दिकैस्तथानङ्गीकृतत्वात्। असाधु शब्दस्य वाचकत्वेऽपि व्याकरणप्रतिपाद्यत्वाभावेन स्फोटाभावस्यैव तत्र सिद्धान्तितत्वात्।

अनुकरणशब्दानान्तु अनुकार्यानुकरणयोर्भेदविवक्षयाऽनुकार्यरूपार्थप्रतिपादकत्वात् स्फोटत्वम्। ननु साध्वनुकरणस्य साधुत्वेन स्फोटत्वेऽपि असाध्वनुकरणस्यासाधुत्वात् कथं स्फोट व्यवहार इति चेन्न, असाध्वनुकरणस्यापि साधुत्वस्वीकारात्। दैत्यैः हेऽरय इति प्रयोक्तव्ये हेऽलय इति प्रयुक्तम्, तदनुकरणं हेलयो हेलय इति कुर्वन्तो न पराबभूवुरिति न वाक्येऽपि तस्यासाधुत्वम् कस्यापि सम्मतम्, तस्मादसाधोरनुकरणस्य साधुत्वं सर्वसम्मतम्। तत्र यदा तयोरभेदविवक्षा तदाऽर्थप्रकाशकत्वाभावान्न स्फोटत्वम्। विशुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदखण्ड वाक्यबोधनाय वर्णस्फोटोऽभ्युपगतः।

अत्र वर्णस्फोटवादिनो मतान्तरन्त्वित्थम्-तथाहि-शक्तेर्व्यासज्यवृत्तित्वे मानाभावाच्चरम वर्णे वाचकत्वशक्तिः। न च तन्मात्रादर्थबोधापत्तिरितिवाच्यम्, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णस्यैव वाचकत्वेन तादृशापत्तिविरहात्'।

इदम्मतान्तरन्न समीचीनम्। प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकं वर्णानामर्थवत्वे प्रातिपदिकत्वापत्तौ धनं वनमित्यादौ "न लोपः प्रतिपादिकान्तस्य" इत्यादिभिर्नलोपाद्यापत्तेश्च। रामोऽस्तीति वक्तव्ये "राम्" इत्यनन्तरं घटिकाकालोत्तरमकारोच्चारणेऽर्थबोधापत्या तादृशानुपूर्व्या एव शक्यतावच्छेदकत्वौचित्याच्चेति वर्णस्फोटः।

**पदस्फोटः**

पूर्वोक्तपद्धत्याऽऽदेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्धः "अथादेशवाचकाश्चेत् पदस्फोटस्ततः स्फुट."। इतिवचनेन तथाऽवगमात्। समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णससुदायरूपपदस्य वाचकता सिद्धयति, वर्णसमुदायस्य वाचकत्वे पदस्फोटोऽपि सिद्धयति। वर्णसमुदायः पदं, न वर्ण इति प्रतीतेर्वर्णातिरिक्तपूर्वापरीभूततत्समुदाया-त्मकपदस्वीकार आवश्यकः। अत एव पदे वर्ण इति व्यवहारोऽपि स्वरसतः संगच्छते। नित्याश्च वर्णास्तेषु पौर्वापर्यञ्च। तथा च वर्ण-समुदायो वाचक इति पदस्फोटपक्षे पर्यवासनम्। सुप्तिङन्तं पदमिति पारिभाषिकपदस्य वाचकत्वस्वीकर्तॄणां मते तु—

**घटेनेत्यादिषु न हि प्रकृत्यादिभिदा स्थिता।**
**वस्नसादाविवेहापि संप्रमोहो हि दृश्यते॥**

इत्यनेन वचनेन समुदायस्य वाचकत्वं सिद्धयति, तथाहि—घटेनेत्यादौ 'घटे" इति प्रकृतिः "न" इति प्रत्ययः, "घट्" इति प्रकृतिः, 'एन' इति च प्रत्यय इति विभागस्य "**सर्वे सर्वपदा देशाः**" इति स्वीकारे विशिष्य प्रकृति-प्रत्यययो र्ज्ञानासम्भवान्न वाचकत्वमिति शाब्दिकै र्विभागः सुज्ञेयः इत्यतो दृष्टान्तव्याजेनाह—वस्नसादाविवेहापीति, "बहुवचनस्य वस्नसौ" इत्यनेन समुदायस्यादेशविधानान्नात्र तद् विभागः सम्भवतीत्यर्थः। एवं घटेनेत्यादौ विभागस्य ज्ञानाभावात् समुदायस्यैव वाचकत्वव्यवस्थया सुप्तिङन्तरूपपदस्य वाचकत्वपर्यवसानात् पदस्फोटः सिद्धः।

अयञ्च पदस्फोटो द्विविधः, सखण्डोऽखण्डश्च। तत्र योऽस्माकं सखण्ड-पदस्फोट उपरि निर्दिष्टः पचति, राम इत्यादि सुबन्त-तिङन्त रूपः, स एव शाक्तं पदमिति तार्किकमते वाक्यस्फोटः। पच' इत्यस्य 'ति' इत्यस्य च शक्तिमत्त्वेन शक्तत्वात् पदत्वेन पदसमुदायात्मकंवाक्यत्वव्यवस्थापनेन तथा वक्तुं शक्यत्वात्।

**वाक्यस्फोटः**

सुप्तिङन्तसमुदायरूपवाक्यस्यापि स्फोटत्वमाह वाक्यपदीये—

**हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु।**
**अर्थे विशिष्य सम्बन्धाग्रहणश्चेत् समं पदे॥**
**लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत्तथा।**

इति वाक्यविशेषेण तथावगमात्। तथा हि—हरेऽव विष्णोऽव इत्यादौ

एङः पदान्तादति" इत्येकादेशे सति न तद्विभागः सुज्ञेयः, तथा च प्रत्येक-पदाज्ञानेऽपि समुदायशक्तिज्ञानात् शाब्दबोधेन समुदायेऽप्यावश्यकी शक्ति-रिति सखण्डवाक्यस्फोटः सिद्ध्यति। वस्तुतस्तु पदैः पदार्थबोधवद् वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽ-भ्युपेयेति पदस्फोटो वाक्यस्फोटश्च व्यवस्थितौ।

वाक्यशक्त्यनभ्युपगमे तु 'घटः' 'कर्मत्वम्' 'आनयनं' 'कृतिः', इत्यादौ वाक्यार्थ-बोधजनकत्वरूपवाक्यशक्तिज्ञानरहितस्यापि बोधप्रसङ्गः। घटमानयेत्यत्रेव पदार्थानामुपस्थितौ सत्यां, सत्यपि तत्पर्यज्ञाने, तादृश-बोधाभावात्।

न च घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्व-बाचकविभक्तेः, ततोधातोः, तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधात्तज्ज्ञानमपि हेतुरिति वाच्यम्, तथा सति वाक्यस्फोटस्यैव सिद्धत्वात्। घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञान-कार्यकारणभावस्येव विशिष्टवाक्यार्थबोधपदसमभिव्याहाररूपवाक्यनिष्ठ-बोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनाद् वाक्यस्फोटः सिद्ध इति।

ननु वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इति चेदाह—"अर्थे विशिष्येति" वाक्यस्येति शेषः। वाक्यस्य वाक्यार्थे विशिष्य शक्त्यग्रहणं चेत्तर्हि पदेऽपि समम्, पद एवान्वयांशे शक्तिरिति पक्षेऽन्वयांशस्यापूर्वत्वेन शक्त्यग्रहः पदेऽपि सममेव। यदि च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशे-ऽज्ञानैवोपयुज्यत इति कुब्जशक्तिवादस्तदा ममापि वाक्यस्य शक्तिरज्ञातै-वोपयुज्यत इति वादाभ्युपगमस्तुल्य इत्येवमुक्तार्थोऽपि प्रदर्शितश्लोकीयः संघटते। ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थग्रहवद्वाक्यार्थेऽपि शक्ति-ग्रह इति चेत्तुल्यमित्याह-लक्षणादधुनेति—लक्ष्यते=तर्क्यतेऽनेनेति लक्षण-म्मनस्तस्मात्, अपि पदं पदपदोत्तरं बोध्यम्। पदेऽपि लक्षणान् मानसस्त-द्ग्रहश्चेत्तदा वाक्येऽपि तदस्त्विति शेषः। एवञ्चोक्तश्लोकव्याख्यया वाक्य-शक्तिरप्यभ्युगतेति सिद्ध्यति वाक्यस्फोटः। वस्तुतः समुदितार्थे विशिष्ट-वाक्यस्यैव प्रथमं तद्ग्रहः, अवापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम्।

ननु पदवाक्यभेदेन व्यवस्थितं स्फोटद्वयमनुपपन्नं, उत्पत्तेरभिव्यक्तेर्वा एकदाऽसम्भवेनोत्पन्नानामभिव्यक्तानां वा वर्णसमूहरूपपदज्ञानासम्भवात्, तथा च सुतरां तत्समूहरूपवाक्यज्ञानासंभव इति चेन्न, उत्तरवर्णप्रत्यक्ष-समये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वं तदुत्तर-प्रत्यक्षकाले य उपस्थितः प्रथमवर्णविशिष्टो द्वितीयो वर्णः तद्वत्त्वं तस्मिन् सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्यैव वाक्यत्वस्यापि सुग्रहत्वात्।

एवं सखण्डपदवाक्यस्फोटौ निरूप्याखण्डपदवाक्यस्फोटौ निरूप्येते।

**तत्राखण्डपदस्फोटः**

अयं स्फोटः सर्वैः पदप्रविष्टवर्णैं र्व्यज्यते, व्यज्यमानः सोऽर्थप्रत्यायक इति शाब्दिकसिद्धान्तः। न च प्रतीतस्य प्रत्यायकत्वन्नास्ति, अन्यथा शब्दं वेत्तीत्यत्रार्थं वेत्तीति प्रत्ययापत्तेरिति "अणुदित् सवर्णस्य चाप्रत्ययः" इति सूत्रस्थभाष्यविरोधः इति वाच्यम्, तस्य सामान्यतः प्रतीतस्य प्रत्यायकत्वन्नास्तीति नार्थः, अपितु शब्दसंज्ञया प्रतीतस्य शब्दस्येतिस्वीकारात्, प्रकरणानुरोधेन तस्य नियमस्य सङ्कोचात्।

अखण्डपदस्फोट विषये यत्तु तार्किकवेदान्तिनः–"यावद्वर्णव्यङ्ग्यौ, वा, यत्किञ्चिद्वर्णव्यङ्ग्यो वा चरमवर्णव्यङ्ग्यः सः। न तावदाद्यः, आशुविनाशिनां मेलनासंभवात्। न द्वितीयः, 'पट' पदप्रयोगे प शब्देनैव व्यञ्जिते स्फोटे ट वर्ण वैयर्थ्यम्। न तृतीयः, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति तन्न, सोऽयं गकार इत्यादि प्रत्यभिज्ञया वर्णानामाशुविनाशित्वे मानाभावात्। न चोत्पन्नो गकारः, नष्टो गकार इति प्रतीतिर्मानमिति वाच्यम्, "तस्माद्वाकाशः संभूत ..." इतिवदाविर्भाव-तिरोभावाभ्युपगमेनाप्युपपत्तेः, अनन्ततत्प्रागभाव-ध्वंसकल्पने गौरवाच्च। द्वितीयपक्षेऽपि न द्वितीयादिवर्णवैयर्थ्यम्, प शब्दोच्चारणे किं प स्फोटः ? उत पटस्फोटः ? इति सन्देह निवर्तकत्वेन सार्थकत्वात्। तृतीयेऽपि पक्षे यथा पट-पद-शक्यो विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्य पटकार्यकारित्वेऽपि अतिरिक्तोऽवयवी स्वीक्रियते तथा मयाप्यभ्युपगम्यते, न च तथानुभवादतिरिक्तः कल्प्यत इति वाच्यम्, स्फोटेऽपि तुल्यत्वात्, गौरवाच्च। ननु स्फोटे लाघवं कथमिति चेन्न, ध्वनिभिरेव स्फोटस्य व्यज्यमानत्वात्। अनन्तवर्णतत्प्रागभावध्वंसकल्पनायाः, नदी-दीन इत्यादौ विभिन्नार्थप्रतीत्यर्थमानुपूर्व्याः, पूर्वपूर्ववर्णानुभवजन्य संस्कारसहकृतचरमवर्णस्य, च कारणताया अकल्पनेन च महालाघवस्य सत्त्वात्। अपरोऽपि प्रकारोऽखण्डपदस्फोटसिद्धये, स चेत्थम्–

यत्र तार्किकादिभिर्यौगिकं योगरूढं च पदमित्युच्यते, पाचकः, पङ्कजमित्यादि चोदाहरन्ति, तत्रास्माभिः सखण्डपदस्फोटत्वेन व्यवह्रियते, खण्डशक्त्यनुसन्धानपूर्वककोशादिना समुदायशक्तिग्रहात्, यस्य तु व्याकरणानभिज्ञस्य केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोटः। यच्च मणिनूपुरादि, वो न इत्यादि च रूढं पदं, तत् सर्वेषामखण्डपदस्फोटत्वेनाभिमतम्। तत्र सर्वेषामपि अवयवार्थज्ञानाभावविशिष्टव्यवहारेण समुदायशक्तिग्रहात्। एवमखण्डपदस्फोटो निरूपितः।

तथा च वाक्यार्थज्ञानम्प्रति पदार्थज्ञानस्य कारणत्वात् पदस्फोटन्निरूप्याखण्डवाक्य स्फोटो निरूप्यते —

**अखण्डवाक्यस्फोटः**

अखण्डवाक्यस्फोटः पदातिरिक्तोऽखण्डपदव्यङ्ग्यो लाघवात् स्वीक्रियते, तच्च लाघवमखण्डपदस्फोटे निरूपितम्। आकाङ्क्षायोग्यताऽऽसत्तीनां कारणता न वाच्येति महालाघवम्, व्यवहारेण वाक्ये शक्तिग्रहाद् वाक्यस्यैव वाचकत्वाद्, वाक्यस्फोटः। न च पूर्वं गृहीतापि वाक्यशक्तिरवापोद्वापाभ्यां त्यक्त्वा पदे गृह्यत इति वाच्यम्, एवं सति पदार्थज्ञानं प्रति वाक्यार्थज्ञानस्य हेतुतापत्तौ वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वमिति सर्वसिद्धान्तभङ्गापत्तेः। अखण्डवाक्यस्फोटो द्विविधः। वर्णातिरिक्तोऽनतिरिक्तश्च। यदा गौरवाद् वर्णा न स्वीक्रियन्ते, लाघवाद् ध्वनिभिरेवाखण्डो वाक्यस्फोटो व्यज्यते इति मतं तदाऽतिरिक्तः। यदा तु ध्वनिभिर्वर्णा व्यज्यन्ते इति मतं तदा घटमानयेति सखण्डवाक्यस्फोटः, क्रियाकारकयो विभागस्य कर्तुं शक्यत्वात्। हरेऽव विष्णोऽवेत्यादौ एकादेशे कृते प्रातिपदिकाख्यातयो विभागाशक्यतयाऽनतिरिक्तो वाक्यस्फोटः, क्रियाकारकज्ञानशून्यस्याशाब्दिकस्य घटमानयेत्ययमपि अनतिरिक्ताखण्डवाक्यस्फोट एव। अखण्डपद-वाक्यस्फोटौ भर्तृहरिणाप्यभिहितावेव निम्ननिर्दिष्टेन वाक्यपदीय श्लोकेन —

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥ १.७३**

**अयमाशयः**—पदे पचतीत्यादौ न वर्णाः, नातो वर्णसमूहः पदमितिशेषः, दृष्टान्तव्याजेनाह —वर्णेष्विति—एकारौकारलृकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा न सन्ति तथा वाक्यात् पदानां प्रविवेको भेदो नास्ति, वाक्यात् पदानां प्रविवेको न कश्चनेत्ययमखण्डरूपातिरिक्त वाक्यस्फोटप्रकाशकः। अनन्तवर्णतत्प्रागभावध्वंसादिकल्पने च गौरवान्न वर्णसमूहः पदं, पदसमूहो वाक्यञ्च, अपि तु अतिरिक्तमखण्डमेव द्वयम्।

न च ककारो गकार इति प्रतीतिरेव वर्णकल्पने मानम्, तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठतत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकार इति प्रतीतिवैलक्षण्यसम्भवात्। स्पष्टं हि भामत्याम्—'तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इति देवताधिकरण इति। न चैवं वायुसंयोग एव वाचकः किन्न स्यादिति वाच्यम्, प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात्। तथा च

वाचकत्वाऽन्यथानुपपत्त्या तदेवेदं पदं, तदेवेदं पदं, तदेवेदं वाक्यं, सोऽयं गकार इति प्रतीत्या चाखण्डः स्फोटः सिद्ध्यति। ननु पदस्याखण्डत्वाच्छास्त्राप्रामाण्यप्रसङ्ग इति वाच्यम्, आनन्दवल्ल्यां शुद्धब्रह्मज्ञानार्थमन्नमयादि पञ्चकोशवत् कल्पनया शास्त्रसाफल्यस्य पूर्वमुक्तत्वात्—

**पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता।**
**उपेय-प्रतिपत्त्यर्था उपाया अव्यवस्थिताः॥**

इति वचनेन तथा बोधितत्वात्। पूर्वपद्धत्या पञ्चधा व्यक्तिस्फोटाः सिद्धा संक्षेपतो विवेचिताश्च त इति।

इत्थम् उपरि निर्दिष्ट दिशा व्यक्तिस्फोटन्निरूप्य क्रमप्राप्तजातिस्फोटोऽपि संक्षेपतो निरूप्यते=-

**जातिस्फोटः**

**शक्यत्व इव शक्तत्वे जाते लाघवमीक्ष्यताम्।**
**औपाधिको वा भेदोऽस्तु वर्णानां तार-मन्दवत्॥**

वर्णास्तावदावश्यकाः, वर्णानभ्युपगमे स्फोटस्यैकत्वात् सोऽयं गकार इतिवत् योऽयं गकारः श्रुतः, सोऽयं हकार इत्यस्याप्यापाद्यमानत्वात्, गकारोऽयं न हकार इत्यनापत्तेश्च।

ननु वर्णात्मक स्फोटस्यैकत्वेऽपि गत्वादिविरुद्धधर्माध्यासमूलकभेदप्रतीते र्नानुपपत्तिः, प्रामाण्यन्तु तस्य वर्णैक्यवादिमते दूरापास्तमेवेति चेन्न, स्फोटे गत्वाद्यभ्युपेयन्नवेति विकल्पग्रासात्, तथाऽभ्युपगमे तदेव गकारोऽस्तु न स्फोट इति स्फोटानभ्युपगमः,

ननु गत्वादेर्वर्णधर्मतया भेदेन कथं तस्य तदात्मकत्वम्? इति चेन्न, वर्णनित्यतावादिभि र्मीमांसकादिभिरतिरिक्तगत्वानङ्गीकारात्। तथा चातिरिक्तस्फोटकल्पन एव गौरवम्। अनभ्युपगमपक्षे तु गकारादिप्रतीतिविरोधः। ननु वायुसंयोगवृत्ति, ध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति वाच्यम्, बाधकं विना प्रतीते र्भ्रमत्वायोगात्।

ननु अतिरिक्तानेकवर्णकल्पनापेक्षया तादृशप्रतीतीनां भ्रमत्वमेव न्याय्यमिति चेन्न, अस्तु वायुसंयोग एव गकारोऽपि, तावतैव प्रतीतेः प्रामाण्यनिर्वाहेऽलं स्फोटकल्पनयेति स्वीकारात्। ननु तथास्वीकारे संयोगस्यातीन्द्रियत्वं दोष इति चेन्न, अतीन्द्रियमात्रवृत्तिधर्मवत् तस्याप्युपपत्तेः। तस्मात् सन्ति वर्णाः, परन्न ते वाचकाः, तत्तद्वर्णभेदभिन्नानन्तशक्तिकल्पने गौरवात्।

ननु तावद्वर्णगतपदत्वादिजात्यनुगतीकृत्यैकस्या एव शक्तेरभ्युपगमान्न तादृशं गौरवमिति चेन्न, आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद् वाचकत्वस्यापि युक्तत्वात्।

न च तादृशजातौ मानाभाव इति वाच्यम्, इदं घटपदं, इदं घटपदमित्येकाकारप्रतीतेरेव मानत्वात्, अनुगतधर्ममन्तरेण सकलतादृशपदेष्वेकाकारप्रतीतेर्भावस्य व्यवस्थानापत्तेः।

ननु अनुगतप्रतीतिमात्रस्य जातिसाधकत्वे विभुत्वादेरपि जातित्वापत्तिरतः कारणतावच्छेदिकादिनैव जातिसिद्धिर्वाच्या, तदभावात् प्रकृते कथं तस्य जातित्वमिति चेन्न, घटोपस्थितित्वावच्छेदेन घट पदज्ञानत्वेन हेतुत्वस्य सत्त्वेन तदवच्छेदकतया जातिविशेषस्यात्रापि साधयितुं शक्यत्वात्।

न च तादृशजात्यभिव्यञ्जकत्वेनावश्यक्लृप्तया वर्णानुपूर्व्यैवानुगतप्रतीते र्हेतुतावच्छेदकत्वस्य च निर्वाह इति वाच्यम्, संयोगविशेषविशिष्टमृदादिभिरेव घट इत्याद्यनुगतप्रतीतेः, दण्डादिकार्यतावच्छेदकत्वस्य च निर्वाहेण घटत्वादिजातरेपि साधयितुमशक्यत्वात्, एवं संयोग विशेषविशिष्टमृदादिभिरेव "घटः" इत्यादि प्रतीत्युत्पत्तेरतिरिक्तावयव्यसिद्ध्यापत्तेश्च।

तस्मात् सा जातिरेव वाचिका सैव तादात्म्येनावच्छेदिका च। ननु सरोरसयोः पदयोरेफाकारसकारविसर्गघटितत्वाविशेषात् सरस्त्वविशिष्टोपस्थापकतावच्छेदकजातेः, रसत्वविशिष्टोपस्थापकतावच्छेदक जातेश्च सत्वेनार्थबोधभेदो न स्यादिति चेन्न, औपाधिको वा भेदोऽस्तु.... इत्यादिना परिहृतत्वात्। तत्र वर्णसाम्येऽपि आनुपूर्वीवैलक्षण्येन रसत्वविशिष्टोपस्थापकतावच्छेदकजातेरव्यवहितोत्तरत्वसम्बन्धेन रविशिष्टसत्वादिरूपानुपूर्व्या एव व्यञ्जकतया तदभावेन न सरः पदाद्रसत्वविशिष्टार्थविषयकबोधापत्तिरिति, यथा वर्णानां नित्यत्वैकत्वमते विजातीयवायु ताल्वाद्यभिघातसत्त्वेन भेदप्रतीतिस्तद्वदानुपूर्वीरूपोपाधिवशाद्भेदप्रत्ययोपपत्तेः स्वीकारात्।

ननु वर्णजातिस्फोटकल्पे जातेः प्रत्येकं वर्णेष्वपि सत्त्वात् प्रत्येकादर्थबोधापत्तिः स्यात् इति चेन्न, यथा भ्रमणत्वादिजातिश्चरमक्रिया प्रत्यक्षव्यङ्ग्या, एवमेषापि चरमवर्ण प्रत्यक्षव्यङ्ग्यैव बोधजनिकेति स्वीकारेण दोषाभावात्। उक्तञ्चानेन पद्येन भर्तृहरिणा—

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।**
**कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥१।९३**

अनेकव्यक्त्यभिव्यङ्ग्यैव जातिरिति स्वीकारेणैव 'स्फोटस्य नित्यत्वात् सर्वदाऽर्थबोधापत्तिरिति परास्तम्। जातेः सनातनत्वेऽपि व्यञ्जकासमव-

धानात्तदभिव्यक्त्यभावेन बोधस्यापादयितुमशक्यत्वात्। यद्यपि प्रत्येकादर्थ-बोधापत्तिरूपो दोष उद्भावितः परिहृतश्च स वर्णजातिस्फोटपक्षे, तथापि पदवाक्यजातिस्फोटपक्षे न स दोष उद्भावयितुं शक्यः, तत्र तस्या जातेः समुदायपर्याप्तत्वस्य धर्मिग्राहकमानेनाभ्युपगमात्, एवञ्चाभिहितं तत्र श्लोकेऽनेकेति। केश्चिद् व्यक्तयो ध्वनय एवेत्यर्थः, ध्वनि-वर्णयो र्भेदाभावादित्यभ्युपेयन्त इति शेषार्थः। काव्यप्रकाशकृता शब्दस्य ध्वनित्वेन प्रकल्पितत्वाच्छ्लोकार्थस्य परिपुष्टत्वात्।

काव्यप्रकाशे "बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य ध्वनिरिति व्यवहारः कृतः" इत्येवमभिधानात्।

ननु जातेः समवेतत्वस्यैव सार्वत्रिकत्वात् कथं समुदायपर्याप्तत्वमुच्यते इति चेन्न, धर्मिग्राहकमानसिद्धत्वादिति समाधानस्य पूर्वमेव प्रदर्शितत्वात्। धर्मवती जातिः, तद्ग्राहकं मानं पदत्वस्य वाक्यत्वस्य वा वाचकत्वानुपपत्तिः, तत्सिद्धत्वात्। न च धर्मग्राहकमानसिद्धत्वं कुत इति वाच्यम्, प्रत्येकवर्णविश्रान्तजाते र्वाचकत्वस्योक्तदूषणकवलितत्वेनासम्भवाद्वाचकत्वानुपपत्त्या कल्प्यमाना पदत्वादिजातिर्यदि पुनः प्रत्येकं विश्रान्ता स्यात्तदा तत्सिद्धिरेव न स्यात्, वाचकत्वानुपपत्तेरपरिहारात्। अतः तत्साधकं तत्पर्याप्तत्वमभ्युपगन्तव्यमिति स्वीकारेण तस्य तादृशसिद्धत्वस्योपपन्नत्वात्।

ननु तत्र का सा जातिरित्याशङ्क्याहः—

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।**
**सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मता॥**

**अयमर्थः**—प्रतिभावं प्रतिपदार्थं यौ सत्यासत्यौ भागौ व्यवस्थितौ, तत्र यत् सत्यं सा जातिः, असत्या व्यक्तयो मता इति, अनेन सत्यांशो जातिः, असत्या व्यक्तय इति स्फुटमवगभ्यते, तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति तस्य भावः। उक्तञ्च कैयटेन—'असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यम्" "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति" इति, एतेनोक्तं परिपुष्टम्।

न च ब्रह्मदर्शने गोत्वादिजातेरप्यसत्यादनित्यत्वम्, आत्मैवेदं सर्वम्" इति श्रुतिवचनादिति कैयटः कथं संगच्छताम्? इति वाच्यम्, अविद्या, आविद्यको धर्मविशेषो वेतिपक्षान्तरमादाय विरोधस्य परिहृतत्वात्।

यद्वा शक्यतावच्छेदके यथा निरूपकत्वसम्बन्धेन शक्तिस्तथा शक्ततावच्छेदकानुपूर्वीरूपे वाचकत्वशक्तिस्तस्या एव स्फोटत्वव्यवहार इत्येवं जातिस्फोटनिष्कर्षः।

परे तु—यथाऽद्वैतिनामात्मभेद औपाधिको मायावृतः चेतनस्यैकत्वेऽप्यस्त्येव, तत्रानुगमार्थं जातिकल्पना च दृश्यते, तथैकस्यैव स्फोटात्मनः शब्दस्य तत्तद्वर्ण तत्तत्कालानुरागरूपोपाधिभेदेनानन्त्यात् तत्पक्षेऽपि अनुगतशक्तिग्रहाय जातिरावश्यकी, परन्तेषां मते तत्तदुपाध्यवच्छिन्नः स्फोटो व्यक्तिपदभाक्, तत्तदुपाध्युपलक्षितो जातिपदभाक्। पूर्वप्रदर्शितमते तु जातिः पदार्थान्तरमिति गौरवं स्पष्टमेव। परेत्विति मतस्यायमाशयः—यथैकमेव चैतन्यमन्तः करणावच्छिन्नं सत् "जीवः" इत्युच्यते, अन्तः करणोपहितं सत् "साक्षी" इत्युच्यते तथैक एव स्फोटो घटत्वादिजात्यवच्छिन्नः सन् पदस्फोट इत्युच्यते, तदुपहितः सन् जातिस्फोट इत्युच्यते। विशेषणत्वे तदवच्छिन्नत्वव्यवहारः, विशेषणत्वञ्च–कार्यान्वयित्वे सति व्यावर्तकम्। तस्योपाधित्वे तदुपहितत्वमुच्यते, उपाधिश्च कार्यानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकम्। यथा रूपविशिष्टो घटोऽनित्यः इत्यत्र रूपं विशेषणं, कार्यान्वयित्वात्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः कार्यानन्वयित्वात्। उक्तञ्च तत्—

**तथैकमपि चैतन्यं बहुधा प्रविभज्यते।**
**यथाऽग्न्युत्था विस्फुलिङ्गा वारिराशेरिवोदकम्॥**

इति। परेत्वित्यादिना प्रतिपादितः पक्ष एव ज्यायान्, अतिरिक्त पदार्थाऽस्वीकारेण गौरवविरहात्।

यत्तु सर्वत्र व्यक्तिरनित्या, ततद्व्यक्त्युपहितं ब्रह्मैव जातिरिति, तन्न समीचीनम्, अविद्याकल्पितानन्तव्यक्तिकल्पनापेक्षयाऽविद्याकल्पितामेकां जातिमुपाधिमाश्रित्य व्यवहारोपपत्तावनेकव्यक्तिकल्पने मानाभावात्। अयं भावः—एको जातिपदार्थ एवाविद्यकः कल्पनीयः, तथा च जातिरूपपदार्थस्य विशेषणत्वे ब्रह्मण एव व्यक्तिरूपेण भानम्, तस्योपाधित्वे ब्रह्मण एव जातिरूपेण कल्पनमिति पक्षे लाघवम्, न हि आविद्यक व्यक्तिरूप पदार्थकल्पन इति। आविद्यक जातिरूपपदार्थस्य सत्त्वादेव "अग्नेरग्नित्वमगात्" इत्यादौ धर्मस्यैव नाश उक्तः। अतएव "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके आविद्यः पदार्थो जाति यावद्व्यवहारं नित्येत्युक्तम्। तस्माद् वैयाकरणनिकाये वर्णस्फोटस्यैव प्रामुख्यमङ्गीक्रियते इत्यलं पल्लवितेन।

**इति व्याकरण-साहित्य-वेदान्त-सांख्ययोग-पुराणेतिहास-धर्मशास्त्राचार्येण पं० श्रीकृष्णमणित्रिपाठिना कृतं वैयाकरणनिकाये स्फोटवादविवेचनं समाप्तम्।**